पस्य च, एतदभाव[138]रूपस्य शून्यस्य; दर्शनं, त्यक्त-ग्राह्यग्राहकविभेदेन यथावस्तु स्वाङ्ककल्पतया प्रकाशनं भवति । चित्प्रकाशतामभिनिविश-मानं हि चित्तं तदाच्छुरितमेव विश्वं पश्यति । तदुक्तं श्रीविज्ञानभैरवे

'हृद्या[139]काशे निलीनाक्षः पद्मसंपुटमध्यगः ।
अनन्यचेताः सुभगे परं सौभाग्यमाप्नुयात् ॥'

इति । परं हि अत्र सौभाग्यं विश्वेश्वरतापत्तिः । तत्त्ववृत्तिसमापन्नं महायोगिनमुद्दिश्य श्रीम-त्स्वच्छन्देऽपि

'स च[140] सर्वेषु भूतेषु भावतत्त्वेन्द्रियेषु च ।
स्थावरं जङ्गमं चैव चेतनाचेतनं स्थितम् ॥
अध्वानं व्याप्य सर्वं तु सामरस्येन संस्थितः ।'

---

१३८ नीलाद्यभावरूपस्य ।

१३९ चित्तत्त्वे वेद्ये धृतधीन्द्रियः प्रमाणप्रमेययोर्मध्यगः सौभाग्यं स्वातन्त्र्यमुपैतीत्यर्थः । अथ वा ऊर्ध्वाधरपद्मसंपुटमध्यं गतो भावनयानु-प्रविष्टः; अत एव हृदयाकाशे निलीनमक्षं मनः तद्द्वारेण च अन्येन्द्रियचक्रं यस्य सः ।

१४० स चेति, स एव प्राप्तपरसामरस्य एव स्थावरमचेतनं; जङ्गमं सचेतनं च; इति संक्षेपेण द्विधा स्थितं षड्विधमध्वानं व्याप्य 'षोढा हि वा-च्यवाचकरूपोऽध्वा' तदन्तर्वर्तिषु सर्वेषु देवयोन्यादिषु चतुर्दशसु भूतेषु; भावेषु धर्मादिषु घटादिषु च; तत्त्वेषु पृथिव्यादिषु; भोगसाधनेषु च करणेषु; सामरस्येन स्थितः, सर्वास्ववस्थासु अविलुप्तपरभैरवसमापत्तिः । एषैव च निर्व्युत्थानसमाख्यात्मा महारहस्यभूरिति ।

इति[141] । स्पन्दे तु

'तथा स्वात्मन्यधिष्ठानात्सर्वत्रैवं भविष्यति ॥'

इत्यनेनैव एतत्संगृहीतम् ॥ १५ ॥

अत्रैव उपायान्तरमाह—

**शुद्धतत्त्वसंधानाद्वाऽपशु-**
**शक्तिः ॥ १६ ॥**

शुद्धं[142] तत्त्वं परमशिवाख्यं, तत्र यदा विश्व-मनुसंधत्ते[143] 'तन्मयमेव एतत्' इति, तदा अविद्य-माना पश्वाख्या बन्धशक्तिर्यस्य तादृगयं सदा-शिववत् विश्वस्य जगतः पतिर्भवति । तदुक्तं श्रीमल्लक्ष्मीकौलार्णवे

'दीक्षासिद्धौ तु ये प्रोक्ताः प्रत्ययाः स्तोभपूर्वकाः[144] ।
संधानस्यैव ते देवि कलां नार्हन्ति षोडशीम् ॥'

---

१४१ अत्र दृष्टप्रत्ययो यथा

'जनः स्वदेहकण्डूर्तिं विजानाति यथा तथा ।
परब्रह्मस्वरूपी च वेत्ति विश्वविचेष्टितम् ॥'

इति ।

१४२ शुद्धमिति 'मायोपरि महामाया' इति रहस्याम्नायदृशा सर्वत्र मायाशक्तिः कृतव्याप्तिः, इत्यतः शुद्धं तत्त्वं परमशिवाख्यमेव । तत्र तत्त्वनिर्देश उपदेश्यजनापेक्षया ।

१४३ 'शिवमयमेवैतद्विश्वम्' इति विमृशति ।

१४४ प्रत्ययाः देशादिव्यवहितविप्रकृष्टवस्तुज्ञानानि; स्तोभः चित्त-स्वावरणम् । संधानस्य शुद्धतत्त्वविमर्शस्य षोडशांशमपि ऐश्वर्यप्रकटनं नार्हति, यतस्तस्य भूमिकाविघ्नसमाक्रान्तत्वम् ।

इति । श्रीविज्ञानभैरवे तु

'[145]सर्वं देहं चिन्मयं हि जगद्वा परिभावयेत् ।
युगपन्निर्विकल्पेन मनसा परमोद्भवः ॥'

इति । तदेतत्

'इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥'

इति कारिकया संगृहीतम् ॥ १६ ॥

ईदृग्ज्ञानरूपस्य अस्य योगिनः—

**वितर्क आत्मज्ञानम् ॥ १७ ॥**

'विश्वात्मा शिव एवास्मि' इति यो वितर्को विचारः, एतदेव अस्य आत्मज्ञानम् । तदुक्तं श्रीविज्ञानभैरवे

'सर्वज्ञः सर्वकर्ता च व्यापकः परमेश्वरः ।
स एवाहं शैवधर्मा इति दार्ढ्याच्छिवो भवेत्[146] ॥'

इति । स्पन्देऽपि

'...............अयमेवात्मनो ग्रहः ।'

---

१४५ आपादात्केशान्तं सर्वं देहं प्रत्यंशं चिदेकरूपम्; युगपत्, अक्रमेण; जगद्वा, स्फुरच्चिच्चमत्कारव्याप्त्या अन्तर्बहिः 'प्रकाशमानं न पृथक् प्रकाशात् अन्यथा चेत्यमानत्वानुपपत्तेः' इति न्यायात् प्रकाशः प्रकाशते इति भावयेत् ।

१४६ शिवस्यायं शैवो धर्मः स्वच्छस्वातन्त्र्यादिः; स एवाहमहमेव स इत्यसंदिग्धत्वेन भावनाच्छिवता; इयं शाक्ती भूः ।

इत्यनेन एतदुक्तम्। तत्र हि आत्मनो ग्रहणं ग्रहो ज्ञानम् एतदेव, यद्विश्वात्मकशिवाभिन्नत्वम्; एषोऽपि अर्थो विवक्षितः ॥ १७ ॥

किं च अस्य—

लोकानन्दः समाधिसुखम् ॥ १८ ॥

लोक्यते इति लोको, वस्तुग्रामः; लोकयति इति च लोको, ग्राहकवर्गः; तस्मिन्स्फुरति[147] सति

'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम्।
योगिनां तु विशेषोऽयं संबन्धे[148] सावधानता ॥'

इति श्रीविज्ञानभट्टारकनिरूपितनीत्या प्रमातृपदविश्रान्त्यवधानान्तश्चमत्कारमयो य आनन्द एतदेव अस्य समाधिसुखम्। तदुक्तं तत्रैव

'सर्वं[149] जगत्स्वदेहं वा स्वानन्दभरितं स्मरेत्।
युगपत्स्वामृतेनैव परानन्दमयो भवेत् ॥'

---

१४७ ग्राह्यग्राहकवर्गे सामान्यलोकपरिकल्पिते स्फुरत्यपि योगिनः 'अहमिदम्' इति विकल्पाभावात् य आनन्दः तदेव समाधिसुखम्।

'अविकारोभयपार्श्वे चाषपिच्छसदृशेऽर्थे।
अन्तर्मुखो योगी बहिर्मुख इति कलना कुतः ॥'

अहन्तेदन्तात्मभागयोर्विकाररहिते स्वात्मरूपे अर्थे इत्यर्थः।

१४८ सर्वदेहिनां सकलप्रमातॄणां वेद्यवेदकसंवेदनं निर्विशेषम्। योगिना तु तत्र आद्यन्तमध्यदशावगाहिप्रमातृस्वरूपाविस्मरणरूपा समाधानतेति।

१४९ स्वानन्दभरितं, त्यक्तविषयात्मानन्दं; स्वामृतेन स्वानन्देन भरितं स्वकीयचिदानन्दपूर्णं सर्वं चिन्तयेत्। अत्र आश्यानचिद्रसरूपस्य जगतोऽपि भासनमन्यधारणातो विशेषाधायकमिति।

इति । एतच्च

'इयमेवामृतप्राप्तिः ................ ।'

इत्यनेन संगृहीतम् ।

अथ च यत् अस्य स्वात्मारामस्य समाधिसुखं,[150] तदेव तत्तादृशम् अवलोकयतां लोकानाम् आनन्दसंक्रमणयुक्त्या स्वानन्दाभिव्यक्तिपर्यवसायि[151] भवति । एतदपि श्रीचन्द्रज्ञानग्रन्थेन प्रागुक्तेन ( २३ पृ० सू० ७ ) सुसंवादम् ॥ १८ ॥

अथ ईदृशस्य अस्य योगिनो विभूतियोगं[152] दर्शयति—

## शक्तिसंधाने शरीरोत्पत्तिः ॥ १९ ॥

'इच्छा शक्तिरुमा कुमारी' ( १–१३ ) इति सूत्रेण या अस्य शक्तिरुक्ता, तामेव यदा अनुसंधत्ते, दार्ढ्येन[153] तन्मयीभवति, तदा तद्वशेन

१५० योगिसंबन्धि स्वानन्दमयं समाधिसुखं स्वानुभवगोचरम् ।

१५१ तल्लोकान् पर्यवसाययति, पर्यवस्यतः प्रयोजयति । तेषां स्वानन्दाभिव्यक्तौ विश्रान्तिप्रदमित्यर्थः ।

१५२ अणिमाद्यैश्वर्येण यथेष्टनिर्माणवैचित्र्यसंपादनसामर्थ्यम् ।

१५३ रुद्रशक्तिपर्याय-परशाक्तधामसमाविष्टतया अव्युच्छिन्नतद्विमर्शाभ्यसनेनेत्यर्थः ।

अस्य यथाभिमतं शरीरमुत्पद्यते । तदुक्तं श्रीमृत्युञ्जयभट्टारके

'ततः प्रवर्तते शक्तिर्लक्ष्य[१५४]हीना निरामया ।
इच्छा सा तु विनिर्दिष्टा ज्ञानरूपा क्रियात्मिका ॥'

इत्युपक्रम्य

'सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा ।
अग्नीषोमात्मिका योनिस्तस्यां [१५५]सर्वं प्रवर्तते ॥'

इति । शक्तिसंधानमाहात्म्यं लक्ष्मीकौलार्णवे

'[१५६]न संधानं विना दीक्षा न सिद्धीनां च साधनम् ।
न मन्त्रो मन्त्रयुक्तिश्च न योगाकर्षणं तथा ॥'

इत्यादिना प्रतिपादितम् । एतच्च

---

१५४ लक्ष्यहीना, वेद्यरहिता परस्फुरत्तात्मा; निष्क्रान्त आमयो महामाया यस्याः तादृशी महामायाद्युल्लासिका पराशक्तिः । तत एव द्वादशान्तधाम्नः प्रवर्तते समुन्मिषति, इच्छा-ज्ञान-क्रियारूपतया क्रमेण स्फुरतीत्यर्थः ।

१५५ प्राप्तपरतत्त्वाभेदस्य योगिनो या उन्मिषन्ती पराशक्तिरुक्ता, सा यतः सर्वदेवानामनाश्रितसदाशिवेश्वरानन्तरुद्रादीनां, शक्तीनां वामा–ज्येष्ठादीनां ब्राह्म्यादीनां च अग्नीषोमात्मिका योनिः; तत एव सोमप्रधाना; यतस्तस्याः सर्वं प्रवर्तते; अत एव अग्नीषोमात्मप्रकृति विश्वम् अग्नीषोममयमिव । तथा च अग्निरपि आह्लादयति हिममपि च दहतीति तत्त्वविद आहुः; इति सृष्टिस्थितिसंहर्तृत्वं शक्तेः प्रदर्शितम् ।

१५६ यदि मन्त्रादिनापि यथाभिमतशरीरोत्पत्तिर्दृश्यते, तथापि न स्वाभाविकी; व्यभिचारात्, कृत्रिमत्वात् । अतः संधानमेव शरीरान्तरोत्पत्तौ कारणमित्यर्थः ।

'यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्हृदि स्थितान्।

सोमसूर्योदयं कृत्वा संपादयति देहिनः[१५७] ॥'

इत्यनेन संगृहीतम्। देहिनः अत्यक्तदेहवासनस्य योगिनो हृदि स्थितान् अर्थान् तत्तदपूर्वनिर्माणादिरूपान् धाता महेश्वरः प्रकाशानन्दात्मतया सोमसूर्यरूपवाहोन्मीलनेन[१५८] सोमसूर्यसामरस्यात्मनश्च [१५९]शक्तेरुदयं कृत्वा बहिर्मुखवाहित्वेन तामासाद्य संपादयति; इति हि अस्यार्थः

'तथा स्वप्नेऽप्यभीष्टार्थान्................ ।'

इत्येतच्छ्लोकप्रतिपादितस्वप्नस्वातन्त्र्यं प्रति दृष्टान्ते योजितः, इति स्पन्दनिर्णये मयैव दर्शितम् ॥ १९ ॥

अन्या अपि अस्य यथाभिलषिताः सिद्धय एतन्माहात्म्येनैव घटन्ते इत्याह—

भूतसंधानभूतपृथक्त्व-
विश्वसंघट्टाः ॥ २० ॥

भूतानि शरीरप्राणभावाद्यात्मकानि; तेषां

---

१५७ देहाभिमानवतः।

१५८ प्राणापानविकासनेन।

१५९ समानशक्तेः प्राणनरूपिण्या देहव्यापिन्याः।

क्वचित् आप्यायनादौ संधानं, परिपोषणं; व्याध्याद्युपशमादौ पृथक्त्वं, शरीरादेर्विश्लेषणं[160]; देशकालादि[161]विप्रकृष्टस्य च विश्वस्य संघट्टो, ज्ञानविषयीकार्यत्वादिकः; अस्य पूर्वोक्तशक्तिसंधाने सति जायते। एतच्च सर्वागमेषु साधनाधिकारेषु अस्ति। तदेव स्पन्दे

'दुर्बलो[162]ऽपि तदाक्रम्य यतः कार्ये प्रवर्तते।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः॥'

इति।

'ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः।
त[163]दुन्मेषविलुप्तं चेत्कुतः सा स्यादहेतुका॥'

इति।

'यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि।
भूयः स्फुटतरो भाति स्व[164]बलोद्योगभावितः॥

१६० भूतानां व्याध्यादेः सकाशात्।

१६१ नित्य-विभु-स्वतन्त्र-चिन्मात्रस्वरूपस्य देशकालादिपरिच्छेदाभावात्; योगिनोऽपि तदावेशसद्भावात् न तद्व्यवहितं किंचित् इति भावः।

१६२ दुर्बलः, क्षीणधातुः; तत्, स्पन्दतत्त्वम्; बुभुक्षानिवृत्तिरपि सिद्धिपुगणितेति भावः।

१६३ तत् अज्ञानम्; सा ग्लानिः; तस्या हि हेतुरज्ञानम्। अतश्च योगिनां वलीपलिताद्यभावः शरीरदार्ढ्यं चास्ति। 'ग्लानिर्विलुम्पिका देहे' इति मूलपाठः।

१६४ स्वबलोद्योगः संविद्बलप्रयत्नः।

तथा[165] यत्परमार्थेन येन यत्र यथा स्थितम् ।
तत्तथा बलमाक्रम्य न चिरात्संप्रवर्तते ॥'

इत्यादिना विभूतिस्पन्दे सोपपत्तिकं दर्शितम् ॥ २० ॥

यदा तु मितसिद्धीरनभिलष्यन् विश्वात्मप्रथामिच्छति तदा अस्य—

## शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः॥२१॥

वैश्वात्म्यप्रथावाञ्छया यदा शक्तिं संधत्ते तदा 'अहमेव सर्वम्' इति शुद्धविद्याया उदयात् विश्वात्मकस्वशक्तिचक्रेशत्वरूपं माहेश्वर्यमस्य सिद्ध्यति । तदुक्तं स्वच्छन्दे

'तस्मात्सा[166] तु परा विद्या यस्मादन्या[167] न विद्यते ।
विन्दते ह्यत्र युगपत्सार्वज्ञ्यादिगुणान्परान्[168] ॥

---

१६५ तथेति तेन संविद्बलप्रयत्नेन यद्वस्तु प्रातिस्विकरूपेण देशकालविशिष्टेन संस्थितं, तद्वस्तु संविद्बलमाश्रितवतो जनस्य आशु प्रतिभातीति । अतोऽत्र देशकालव्यवहितवस्तुनो ज्ञानविषयीभवनं नो दुर्घटमिति भावः ।

१६६ मायान्तावधिकात्मतत्त्वोर्ध्वस्थ-शुद्धविद्यादिशक्त्यन्ताध्वव्यापकात् विद्यातत्त्वात् इयमन्यैव विद्या ।

१६७ अन्येत्यपरा ईदृशी इत्यर्थात्; एतयैवाशेषविश्वक्रोडीकारात् ।

१६८ परानिति अभेदरूपान् सार्वज्ञ्यादीन् यतो युगपत् अत्र उन्मनायां योगिवरो लभते, तत इयं परा विद्या 'विद्लृ लाभे' इति धात्वर्थानुगमात् । यदाहुः

वेदनानादिधर्मस्य[169] परमात्मत्वबोधना ।
वर्जनापरमात्मत्वे तस्माद्विद्येति सोच्यते ॥
'तत्रस्थो[170] व्यञ्जयेत्तेजः परं परमकारणम् ।
परस्मिंस्तेजसि व्यक्ते तत्रस्थः शिवतां व्रजेत् ॥'

इति । तदेतत्

'दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते ॥'

इत्यनेनैव संगृहीतम् ॥ २१ ॥

यदा तु स्वात्मारामतामेव[171] इच्छति तदा अस्य—

---

'सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः
षडाहुरङ्गानि महेश्वरस्य ॥'

इति ।

१६९ अनादिधर्मः स्वातन्त्र्यशक्त्यात्मा स्वभावः; तस्य वेदना विचारणा; आत्मनश्च यत्परमात्मत्वं शिवरूपत्वमस्ति,तस्य बोधना अवगमहेतुः; अत एव अपरमात्मत्वे अतद्विषये इयं वर्जना संपद्यते; तस्मात् 'विद विचारणे' 'विद ज्ञाने' इति धात्वर्थानुगमात् इयं विद्योच्यते इति क्षेमराजपादाः ।

१७० तत्रेति, उन्मनाख्यायां विद्यायां; व्यञ्जयेत् आत्मीयमेवोन्मीलयेत् प्रत्यभिजानीयात्; तेजः चिज्ज्योतिः; परम् असंकुचितं; परमकारणं परमशिवरूपम्; अतश्च शिवतां व्रजेत्, तदैकात्म्यमियात् इति श्रीक्षेमराजपादाः ।

१७१ स्वात्मनि आ समन्तात् रमते इति स्वात्मारामः ।

## महाह्रदानुसंधानान्मन्त्रवी-
## र्यानुभवः ॥ २२ ॥

परा भट्टारिका संवित् इच्छाशक्तिप्रमुखं स्थूलमेयपर्यन्तं विश्वं वमन्ती, खेचरीचक्राद्यशेषवाहप्रवर्तकत्व-स्वच्छत्वानावृतत्व-गभीरत्वादि-धर्मयोगान्महाह्रदः[१७२]; तस्यानुसंधानात्, अन्तर्मुखतया अनारतं तत्तादात्म्यविमर्शनात्; वक्ष्यमाणस्य शब्दराशिस्फारात्मकपराहन्ताविमर्शमयस्य[१७३] मन्त्रवीर्यस्यानुभवः[१७४], स्वात्मरूपतया स्फुरणं भवति । अत एव श्रीमालिनीविजये

'या सा शक्तिर्जगद्धातुः.................. ।'

इत्युपक्रम्य इच्छादिप्रमुखपञ्चाशद्भेदरूपतया[१७५]

---

१७२ खेचरीगोचर्याद्यशेषप्रवाहप्रवर्तकत्वात्, विश्वप्रतिबिम्बसहत्वेन स्वच्छत्वात्, प्रतिबिम्बसहत्वेपि विश्वानावृतत्वात्, दुर्लक्षतया गभीरत्वात् संविदो महाह्रदसाधर्म्यमुद्दिश्यते ।

१७३ शब्दानां पदवाक्याद्यात्मना विभक्तानां स्थूलानामविभागस्वभावः कारणात्मा यो राशिः, तस्य स्फारः नाम स्फुरणकर्तृता, तत्तदामर्शात्मना स्वभित्तौ विश्वरूपतावबिभासयिषा इति ।

१७४ मन्त्राणां वीर्यभूतस्य महामन्त्रस्य, पूर्णाहन्तायाः ।

१७५ आविक्षान्तपञ्चाशद्वर्णरूपेण ।

मातृका-मालिनीरूपताम्[१७६] अशेषविश्वमयीं शक्तेः प्रदर्श्य, तत एव मन्त्रोद्धारो दर्शितः; इति परैव शक्तिर्महाह्रदः; ततः तदनुसंधानात्[१७७] मातृका-मालिनीसतत्त्वमन्त्रवीर्यानुभव इति युक्तमुक्तम्। एतदेव

'तदाक्रम्य बलं मन्त्राः………………… ।'

इत्याद्युक्त्या भङ्ग्या प्रतिपादितम्।

तदेवं 'चैतन्यमात्मा' (१–१) इत्युपक्रम्य तत्स्वातन्त्र्यावभासिततदख्यातिमयं[१७८] सर्वमेव बन्धं यथोक्तोद्यमात्मकभैरवसमापत्तिः प्रशमयन्ती, विश्वं स्वानन्दामृतमयं करोति, सर्वाश्च सिद्धीः मन्त्रवीर्यानुप्रवेशान्ता ददाति। इति शाम्भवो-[१७९]पायप्रथनात्मा अयं प्रथम उन्मेष उक्तः। अत्र तु मध्ये शक्तिस्वरूपमुक्तं, तत् शाम्भवरूपस्य

---

१७६ परप्रमात्रवियुक्तत्वात् तदनतिरिक्ता अक्षुब्धैव पराशक्तिः पशुभिः सर्वमन्त्रविद्यानां योनित्वेन 'अज्ञाता मातृका' इत्युक्ता। क्षुब्धा तु बीजयोनिषु परस्परसंघट्टात्मलोलीभावात् नादि-फान्तरूपा मालिनी इति-संज्ञा; मलते विश्वमन्तर्दर्पणवत् धत्ते इति, विश्वस्वरूपिणी इत्यर्थः।

१७७ अनुसंधानं विमर्शनम्।

१७८ चैतन्याख्यातिमयम्, आणवमलस्वरूपमित्यर्थः।

१७९ शम्भौ प्रकाशरूपे भवः शाम्भवः; तत आगत इति वा।

शक्तिमत्त्तां[१८०]प्रदर्शनाभिप्रायेण इति शिवम् ॥२२॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्त-पादपद्मोपजीवि-श्रीक्षेमराजविरचितायां शिव-सूत्रविमर्शिन्यां शाम्भवोपायप्रकाशनं नाम प्रथम उन्मेषः ॥ १ ॥

---

[१८०] शक्तिमत्ता स्वातन्त्र्यसारता ।

# शिवसूत्रविमर्शिनी।

अथ

## द्वितीय उन्मेषः।

इदानीं शाक्तोपायः प्रदर्श्यते। तत्र शक्तिः[1] मन्त्रवीर्यस्फाररूपा; इति प्रथमोन्मेषान्तसूत्रित-तत्स्वरूपविवेचनपुरःसरमुन्मेषान्तरमारभमाणो मन्त्रस्वरूपं तावत् निरूपयति—

**चित्तं मन्त्रः॥ १ ॥**

चेत्यते विमृश्यते अनेन परं तत्त्वम् इति चित्तं, पूर्णस्फुरत्तासतत्त्वप्रासाद-प्रणवादिविमर्शरूपं संवेदनम्; तदेव मन्त्र्यते[2] गुप्तम्, अन्तर् अभेदेन विमृश्यते परमेश्वररूपम् अनेन, इति कृत्वा मन्त्रः। अत एव च परस्फुरत्तात्मकमनन-धर्मात्मता, भेदमयसंसारप्रशमनात्मक-त्राणधर्मता च अस्य निरुच्यते।

अथ च मन्त्रदेवताविमर्शपरत्वेन प्राप्ततत्सा-

---

१ परा संविच्छक्तिः पूर्णाहन्ता, या विश्वस्फुरणकर्तृतारूपा।

२ 'मनु अवबोधने' 'त्रृ पालने' इत्येताभ्यां निरुक्ततया निर्वचनीयत्वेन निर्णीततया उच्यते।

मैं[3]रस्यम् आराधकचित्तमेव मन्त्रः, न तु विचित्र-वर्णसंघट्टनामात्रकम्। यदुक्तं श्रीमत्सर्वज्ञानोत्तरे

'उच्चार्यमाणा ये मन्त्रा न मन्त्रांश्चापि तान्विदुः ।
मोहिता देवगन्धर्वा मिथ्याज्ञानेन गर्विताः ॥'

इति । श्रीतन्त्रसद्भावेऽपि

'मन्त्राणां जीवभूता तु या स्मृता शक्ति[4]रव्यया ।
तया हीना वरारोहे निष्फलाः शरदभ्रवत् ॥'

इति । श्रीश्रीकण्ठीयसंहितायां तु

'पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन ।
ज्ञानमूलमिदं सर्वमन्यथा नैव सिद्ध्यति[5] ॥'

इत्युक्तम् । एतच्च स्पन्दे

'सहाराधकचित्तेन तेनैते शिवधर्मि[6]णः ॥'

इति भङ्ग्या प्रतिपादितम् ॥ १ ॥

अस्य च—

## प्रयत्नः साधकः ॥ २ ॥

---

३ मन्त्राधिदेवताभिः सह प्रातैक्यम् ।

४ पूर्णाहंविमर्शनात्मिका संविच्छक्तिः ।

५ वाच्यवाचकयोरभेदोपचारात् मन्त्रो मन्त्रदेवता । एवं मन्त्रिमन्त्रदेवतासु आराध्याराधकभावेन पृथग्धीः सिद्धिं नैति । मननत्राणधर्मकत्वात् तु मन्त्राः ज्ञानशक्तौ स्थिताः प्राप्तज्ञानशक्त्यात्ममहावीर्याः सर्वसिद्धिदाः प्रतिनियतकार्यसंपादनसमर्था भवन्ति इत्यर्थः ।

६ शिवस्य परमेश्वरस्य अनन्यसाधरणः सर्वज्ञत्वादिर्गुणो धर्मो विद्यते येषां ते मन्त्राः, मननत्राणरूपाः; शिवादभिन्नस्वरूपा इत्यर्थः ।

यथोक्तरूपस्य मन्त्रस्य अनुसंधित्सा[७]प्रथमोन्मेषावष्टम्भप्रयतनात्मा अकृतको यः प्रयत्नः स एव साधको, मन्त्रयितुर्मन्त्रदेवतातादात्म्यप्रदः। तदुक्तं श्रीतन्त्रसद्भावे

'आमिषं तु यथा खस्थः संपश्यञ्शकुनिः प्रिये।
क्षिप्रमाकर्षयेद्यद्वद्वेगेन सहजेन तु॥
तद्वदेव हि योगीन्द्रो मनो बिन्दुं विकर्षयेत्[८]।
यथा शरो धनुःसंस्थो यत्नेनाताड्य धावति॥
तथा बिन्दुर्वरारोहे उच्चारेणैव धावति॥'

इति। अन्यत्रापि

'[९]तद्ग्रहो मन्त्रसद्भावः................।'

इति। अत्र हि तद्वत् इति, अकृतकनिजोद्योगबलेन योगीन्द्रो मनः कर्म, बिन्दुं विकर्षयेत् परप्रकाशात्मतां प्रापयेत् इति। तथा बिन्दुः

---

७ अनुसंधातुमिच्छा अनुसंधित्सा, तस्याः प्रथमं परप्रतिभोन्मज्जने यो निरोधः तत्र प्रयतनस्वभावः।

८ विकर्षयेत् इति द्विकर्मकं क्रियापदम्। बिन्दुः अविभक्तप्रकाशरूपः। यदुक्तम्

'उदितायां क्रियाशक्तौ सोमसूर्याग्निधामनि।
अविभागः प्रकाशो यः स बिन्दुः परमो हि नः॥'

इति।

९ तज्ज्ञानमेव मन्त्रसद्भावः, मन्त्रवीर्यमित्यर्थः।

परप्रकाशः अकृतकोद्यन्तृतात्मना उच्चारेण[10] धावति, प्रसरति इत्यर्थः । एतच्च स्पन्दे

'अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या[11] ॥'

इत्यनेनोक्तम् ॥ २ ॥

ईदृशसाधकसाध्यस्य मन्त्रस्य पूर्वोपक्षिप्तं वीर्यं लक्षयति—

विद्याशरीरसत्ता मन्त्ररहस्यम् ॥ ३ ॥

विद्या पराद्वयप्रथा, शरीरं स्वरूपं, यस्य स विद्याशरीरो भगवान् शब्दराशिः; तस्य या सत्ता, अशेषविश्वाभेदमयपूर्णाहंविमर्शनात्मा स्फुरत्ता, सा मन्त्राणां रहस्यम्[12], उपनिषत् ।

---

१० उच्चारेण विमर्शरूपेण, न तु स्थान-करण प्रयत्नरूपबीजाक्षरोच्चारेण, तस्याणवोपायपर्यवसायित्वात्; परप्रमातृविश्रान्त्यर्थे सहजोद्यमनकर्तृतात्मना विमर्शेन स्फुरति इति ।

११ तदात्मतासमापत्तिः, मन्त्रदेवतात्मतायाः समापत्तिः । इदमत्र तात्पर्यम् । न्यासादिहेतोः मन्त्ररुद्धान्यदेवताकारायां मन्त्रोच्चारणावस्थायां साधकचेतसः, स्वयमप्रयत्नेन संपद्यमानं यदभिन्नरूपत्वं, स एव परामर्शक्षमसंविदो ध्यातुः, आराध्यदेवतायाः प्रत्यक्षदर्शनरूपो मुख्य उदयः; न तु व्यतिरेकविभाव्यमानाकारता, इति अनयैव संविदा शिवरूपतापत्तेः 'शिवो भूत्वा शिवं यजेत्' इत्यस्य विधेः चरितार्थत्वम् ।

१२ वीर्यमित्यर्थः ।

## यदुक्तं श्रीतन्त्रसद्भावे

'सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥'

इति । तत्रैव[13] च अयमर्थः अतिरहस्योऽपि वितत्य स्फुटीकृतः[14] । तथा च

'न जानन्ति गुरुं देवं शास्त्रोक्तान्समयांस्तथा ।
दम्भकौटिल्यनिरता लौल्यार्थाः[15] क्रिययोज्झिताः ॥
अस्मात्तु कारणाद्देवि मया वीर्यं प्रगोपितम् ।
तेन गुप्तेन ते गुप्ताः शेषा वर्णास्तु केवलाः ॥'

इति-पीठिकाबन्धं[16] कृत्वा

'या सा तु मातृका देवि परतेजः[17]समन्विता ।
तया व्याप्तमिदं विश्वं सब्रह्मभुवनान्तकम्[18] ॥
तत्रस्थं[19] च यदा देवि व्यापितं च सुरार्चिते ।
अवर्णस्थो यथा वर्णः स्थितः सर्वगतः प्रिये ॥
तथाहं कथयिष्यामि निर्णयार्थं स्फुटं तव ।'

---

१३ श्रीतन्त्रसद्भावे ।

१४ वक्ष्यमाणागमेन ।

१५ लोला रसना तस्या इदं रसास्वादनं लौल्यं, तदेव अर्थो येषां ते, रसास्वादासक्ताः । उपलक्षणमेतत् शब्दादिविषयचमत्कारनिरता इत्यर्थः ।

१६ पीठिकाबन्धो मूलबन्धः; शास्त्रादौ संक्षेपेण संबन्धादिकथनरूपः ।

१७ परतेजः पराहन्ता ।

१८ अनाश्रितशिवादारभ्य स्थूलमेयपर्यन्तम् ।

१९ तत्रस्थमिति मातृकास्थं परं तेजः । अवर्णस्थ इति अनुत्तरस्थितः ।

इत्युपक्रम्य

> 'या सा शक्तिः परा सूक्ष्मा निराचारेति कीर्तिता ॥[२०]
> हृद्विन्दुं वेष्टयित्वान्तः सुषुप्तभुजगाकृतिः ।
> तत्र सुप्ता महाभागे न किञ्चिन्मन्यते उमे ॥
> चन्द्राग्निरविनक्षत्रैर्भुवनानि चतुर्दश ।
> क्षिप्त्वोदरे तु या देवी विषमूढेव सा गता ॥

---

२० अनुत्तरशक्तिः स्वस्वातन्त्र्यात् ग्राह्यग्राहकात्मभावजातस्य इयत्तापरिच्छेदनेन स्वरूपगोपनात्मसंकोचावलम्बनात् स्वात्मानं सर्वोग्रततया अवस्थितेः प्रकटं कुर्वाणापि बिन्दुस्वरूपिणी । वेत्तीति विन्दुः विदिक्रियायां स्वतन्त्रः प्रमाता; तस्य रूपमविभागः प्रकाशः तत्स्वभावैव, अत एव परा संविद्रूपा, सूक्ष्मा प्राणनारूपा, नियतात्मध्यानपूजादिकात् आचारात् निष्क्रान्ता निराचारा, हृद्विन्दुं हृत्पद्ममण्डलान्तःस्थं, संकुचितात्मताप्राधान्यात् बहीरूपतया भेदभूमावेव प्राप्तप्ररोहं नरात्मकं बिन्दुम् अन्तर्वेष्टयित्वा स्वात्मान्तर्लीनं विधाय, सुपुप्तभुजगाकृतिः, बहिर्भावौन्मुख्यविरहितत्वात् स्वात्ममात्रविश्रान्ता इत्यर्थः । इदमत्र तात्पर्यम् । विन्दुः परप्रकाशात्मा, स्वातन्त्र्यात् विश्वमवबिभासयिषुः द्वादशान्त-भ्रूमध्य-हृदयलक्षणेषु स्थानेषु विश्रान्तिभेदात् नर-शक्ति-शिवात्मको बोध्यः; इच्छाद्यात्मक-शिव-विद्या-आत्मलक्षणरूपतया प्रस्फुरित इत्यर्थः । यदुक्तं

> 'अत्र प्रकाशमात्रं यत्स्थिते धामत्रये सति ।
> उक्तं विन्दुतया शास्त्रे शिवविन्दुरसौ मतः ॥'

इति ।

२१ प्रमा-प्रमाण-प्रमेय-प्रमातृभिः सह चतुर्दश महास्वरान् उदरे क्षिप्त्वा स्वात्मसात्कृत्य, विषेण मोहिता इव संभवन्ती स्वात्मानमपि अजानती भवति इत्यर्थः ।

प्रबुद्धा सा निनादेन[22] परेण ज्ञानरूपिणा ।
मथिता चोदरस्थेन विन्दुना वरवर्णिनि ॥
तावद्वै भ्रमवेगेन मथनं शक्तिविग्रहे ।
भेदात्तु प्रथमोत्पन्ना विन्दवस्तेऽतिवर्चसः ॥
उत्थिता[23] तु यदा तेन कला सूक्ष्मा तु कुण्डली ।
चतुष्कलमयो विन्दुः शक्तेरुदरगः प्रभुः ॥
मध्यमन्थनयोगेन ऋजुत्वं जायते प्रिये ।
ज्येष्ठाशक्तिः स्मृता सा तु विन्दुद्वयसुमध्यगा ॥
विन्दुना क्षोभमायाता रेखैवामृतकुण्डली ।
रेखिणी नाम सा ज्ञेया उभौ विन्दू यदन्तगौ ॥
त्रिपथा सा समाख्याता रौद्री नाम्ना तु गीयते ।
रोधिनी सा समुद्दिष्टा मोक्षमार्गनिरोधनात् ॥

---

२२ विन्दुरेव तत्तत्परामर्शतामुल्लिलासयिषुः नादात्मकशब्दरूपतया स्फुरितः, शब्दयति स्वाभेदेन विश्वं परामृशति इति शब्दः, परावाग्रूपो विमर्शः, स एव नदति सर्वेषामेव जीवकलात्वेन स्फुरति इति नादात्मा । यदुक्तम्

'योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः ।'

इति ।

२३ परैव सूक्ष्मा अमाकलारूपा कुण्डलिनी शक्तिः शिवेन सह परस्परसामरस्यरूपमध्यमन्थकभावात्मकं संघट्टमासाद्य उत्थिता सती, इच्छा ज्ञान क्रियारूपतामाश्रित्य रौद्रीत्वमुन्मुद्रयन्ती, शृङ्गाटकाकारताम्बिकात्वमवलम्बमाना, उकारात्मकशशाङ्कशकलाकारतां ज्येष्ठात्वमधितिष्ठन्ती च, शिवबिन्दूदितकालाग्निरूपरेफात्मकविन्दुविश्रान्तस्पष्टरेखाकारतामाभासयन्ती, इत्यादिवर्णशरीरमुल्लासयति; इति उत्थिता इत्यारभ्य एकैवेत्थमित्यन्तस्य श्लोकपञ्चकस्य तात्पर्यार्थो निरूपितः ।

शशाङ्कशकलाकारा अम्बिका चार्धचन्द्रिका ।
एकैवेत्थं परा शक्तिस्त्रिधा[24] सा तु प्रजायते ॥
आभ्यो युक्तवियुक्ताभ्यः संजातो नववर्गकः ।
नवधा च स्मृता सा तु नववर्गोपलक्षिता ॥
पञ्चमन्त्रगता देवि सद्य[25]-आदिरनुक्रमात् ।
तेन पञ्चविधा प्रोक्ता ज्ञातव्या सुरनायिके ॥
स्वरद्वादशगा देवि द्वादशस्था उदाहृता ।
अकारादिक्षकारान्ता स्थिता पञ्चाशता भिदा ॥
हृत्स्था[26] एकाणवा प्रोक्ता कण्ठे प्रोक्ता द्वितीयका ।
त्रिराणवा तु ज्ञातव्या जिह्वामूले सदा स्थिता ॥
जिह्वाग्रे वर्णनिष्पत्तिर्भवत्यत्र न संशयः ।
एवं शब्दस्य निष्पत्तिः शब्दव्याप्तं चराचरम् ॥'

इत्यादिना ग्रन्थेन परभैरवीयपरावाक्शक्त्यात्मकमातृका, अत एव ज्येष्ठा-रौद्री-अम्बा-

---

२४ अनुत्तरेच्छोन्मेषरूपा ।

२५ सद्योजात-वामदेव-ईशान-तत्पुरुष अघोराख्याः पञ्च मन्त्राः ।

२६ परावाग्रूपस्य अहमात्मनः परामर्शस्य हि अनन्यापेक्षं परत्वमिति परावाग्रूपैव परमेश्वरी स्वस्वातन्त्र्यात् बहीरूपतामुल्लिलासयिषुः वाच्यवाचकक्रमानुदयात्, विभागस्य अस्फुटत्वात्, चिज्ज्योतिष एव प्राधान्यात्, द्रष्टृरूपतया पश्यन्तीशब्दव्यपदेश्या। तदनु वाच्यवाचकक्रमस्य आसूत्रितविभागत्वेऽपि स्फुटास्फुटरूपत्वेन बुद्धिमात्रनिष्ठतया दर्शनप्राधान्यात् द्रष्टृदृश्ययोरन्तरालवर्तित्वेन मध्यमापदवाच्या। ततोऽपि स्थानकरणप्रयत्नबलात्, तत्तद्वर्णक्रमोपग्रहात्, विभागस्य स्फुटत्वात्, दृश्यस्यैव प्राधान्यात्, विखरे शरीरे भवत्वात् वैखरीशब्दव्यपदेश्या । इति विश्वरूपतावभासने पर सूक्ष्म-स्थूलरूपतया त्रैविध्यम्; इति हृत्स्थेत्यादिश्लोकद्वयस्यायं तात्पर्यार्थो निरूपितः ।

ख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयस्य उक्तत्वात्, वर्णसंघट्टनाशरीराणां मन्त्राणां सैव भगवती व्याख्यातरूपा विद्याशरीरसत्ता रहस्यम्—इति प्रदर्शितम् । प्रत्यागमं च मातृकामालिनीप्रस्तारपूर्वकं मन्त्रोद्धारकथनस्य अयमेव आशयः । रहस्यागमसारसंग्रहरूपत्वात् शिवसूत्राणाम् आगमसंवादे भरः अस्माभिः कृत; इति नास्मभ्यम् असूयितव्यम् । एवमपि संवादिते आगमे यदि रहस्यार्थो न बुध्यते, तस्मात् सद्गुरुसपर्या कार्या । एष च सूत्रार्थः

'[२७]तदाक्रम्य बलं मन्त्राः................ ।'

इत्यनेन कारिकाद्वयेन स्पन्दे दर्शितः ॥ ३ ॥

येषां तु एवं-विधमेतन्मन्त्रवीर्यं प्रोक्तमहाह्रदानुसंधानौपयिकमपि परमेश्वरेच्छात एव न हृदयङ्गमीभवति; अपि तु आनुषङ्गिकमात्रविन्दुनादादिकलाजनितासु मितसिद्धिषु चित्तं रोहति, तेषाम्—

२७ तदिति निरावरणचिद्रूपबलमधिष्ठाय मन्त्राः अनुग्रहादौ अधिकारे, देहिनां करणानि इव स्वाधिकारे प्रवर्तन्ते । निवृत्ताधिकाराणां तु तेषाम् आराधकचित्तेन सह स्वस्वभावव्योम्नि संलीनतया मायाकालुष्यराहित्यात् शिवधर्मितासमापत्तिः ।

## गर्भे चित्तविकासोऽविशिष्ट-विद्यास्वप्नः ॥ ४ ॥

गर्भः अख्यातिर्महामाया; तत्र तदात्मके मितमन्त्रसिद्धिप्रपञ्चे यश्चित्तस्य विकासः, तावन्मात्रे प्रपञ्चे संतोषः; असावेव अविशिष्टा, सर्वजनसाधारणरूपा; विद्या, किञ्चिज्ज्ञत्वरूपा अशुद्धविद्या; सैव स्वप्नो, भेदनिष्ठो विचित्रो विकल्पात्मा भ्रमः । तदुक्तं पातञ्जले

'ते[२८] समाधावुपसर्गा व्युत्थाने सिद्धयः ॥' (३-३७)

इति । तदेतत्

---

२८ ते प्रातिभादयः समाहितचित्तस्य उत्पद्यमाना उपसर्गाः, तद्दर्शनप्रत्यनीकत्वात्; व्युत्थितचित्तस्य उत्पद्यमानाः सिद्धय इत्यनुमीयते । तत्र योगजधर्मानुगृहीतेभ्यो मनः-श्रोत्र-त्वक्-चक्षुः-जिह्वा-घ्राणेभ्यो यथासंख्यं प्रातिभ-श्रावण-वेदन-आदर्श-आस्वाद-वार्त्तानि जायन्ते । तत्र प्रातिभात् सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम्, श्रावणात् दिव्यशब्दज्ञानम्, वेदनात् दिव्यस्पर्शाधिगमः, आदर्शात् दिव्यरूपदर्शनम्, आस्वादात् दिव्यरससंवित्, वार्त्तात् दिव्यगन्धज्ञानम् । इदमत्र सूत्रभाष्ययोः प्रयोजनम् । व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते जन्मदुर्गत इव द्रव्यकणिकामपि द्रविणसंभारम्; योगिना तु समाहितचित्तेन उपनताभ्योऽपि ताभ्यो विरक्तव्यम् । अभिसंहित-तापत्रयौत्पत्तिकोपशमरूपपरमपुरुषार्थः स खलु अयं तत्प्रत्यनीकासु सिद्धिषु विरज्येत इति ।

'अतो विन्दुरतो[२९] नादो रूपमस्मादतो रसः ।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः ॥'

इत्यनेन दर्शितम् ॥ ४ ॥

यदा तु आगतामपि मितसिद्धिं खिलीकृत्य परामेव स्थितिमवष्टभ्नाति योगी ततः—

## विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ॥ ५ ॥

प्राङ्निर्दिष्टसतत्त्वाया विद्यायाः स्वाभाविके समुत्थाने, परमेशेच्छामात्रघटिते मितसिद्धि-न्यग्भाविनि सहजे समुन्मज्जने; खे बोधगगने चरति इति खेचरी मुद्रा अभिव्यज्यते । की-

२९ विन्दुः भ्रूमध्यादौ प्रदेशे ध्यानाभ्यासप्रकर्षप्रवर्धमानोत्तरोत्तर-प्रसादः तेजोविशेषः, यो विन्दुभेदाभ्यासात् धरातत्त्वध्यायिनामभिव्य-ज्यते । तथा नादो वेगवन्नद्योघनिर्घोषघनोपक्रमः क्रमसूक्ष्मीभावाभिव्य-ज्यमानमधुमत्त-मधुकरध्वनितानुकारी स्वोच्चरितो ध्वनिविशेषः, यं व्योमतत्त्वाभ्यासिनः शृण्वन्ति । तथा रूपं संतमसाद्यावरणेऽपि सति तत्तद्दृश्यवस्त्वाकारदर्शनं, यत् तेजस्तत्त्वे न्यक्षनिक्षप्तमतिभिः निरीक्ष्यते । तथा रसो रसवद्भोग्यवस्तुविरहेऽपि अमृतास्वादो मुखे, यो लोलाग्र-लम्बिकादिधारणानिरतैः अप्तत्त्वध्यायिभिरुपलभ्यते । पवनतत्त्वध्यायिनां स्पर्शसुखविशेषोऽपि अस्मादेव प्रवर्तते इति द्रष्टव्यम् । उन्मेषाभ्यासयो-गिना नात्र संतोषिणा भाव्यम् निरुत्तरपदारोहप्रत्यूहभूतत्वात् ।

दृशी खेचरी, शिवस्य चिन्नाथस्य अवस्थातुः संबन्धिनी अवस्था, स्वानन्दोच्छलत्तारूपा । न तु

'बद्ध्वा पद्मासनं योगी नाभावक्षेश्वरं न्यसेत् ।
दण्डाकारं तु तावत्तन्नयेद्यावत्कखत्रयम्[30] ॥
निगृह्य तत्र तत्तूर्णं प्रेरयेत् खत्रयेण तु ।
एतां बद्ध्वा महायोगी खे गतिं प्रतिपद्यते ॥'

इत्येवं संस्थानविशेषानुसरणरूपा; अपि तु

'............................................ पराम् ।
गतिमेत्यर्थभावेन कुलमार्गेण[31] नित्यशः ॥
चरते सर्वजन्तूनां खेचरी नाम सा स्मृता ।'

इति—श्रीतन्त्रसद्भावनिरूपितपरसंवित्तिस्वरूपा । एवमिह भेदात्मकमायीयसमस्तक्षोभप्रशान्त्या चिदात्मकस्वरूपोन्मज्जनैकरूपं मन्त्रवीर्यं मुद्रावीर्यं च आदिष्टम् । तदुक्तं कुलचूडामणौ

'एकं सृष्टिमयं[32] बीजमेका मुद्रा च खेचरी ।
द्वावेतौ यस्य जायेते सोऽतिशान्तपदे स्थितः ॥'

---

३० के शिरसि खत्रयं, शक्ति-व्यापिनी-समनारूपमाकाशत्रयं भ्रूबिन्दोः प्रभृति यावत् ब्रह्मरन्ध्रं संस्थितम् । तत्र तत् मनः अवष्टभ्य खत्रयेण ऊर्ध्वगमनाय प्रेरयेदिति ।

३१ कुलमार्गेण, अक्षकुलद्वारेणेत्यर्थः ।

३२ सृष्टिमयं बीजमिति, मन्त्रवीर्यरूपम् अहमिति-बीजम् । मुद्रा, परभैरवीयात्मा ।

इति । स्पन्दे तु मन्त्रवीर्यस्वरूपनिरूपणेनैव मुद्रावीर्यं संगृहीतम् ।

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।'

इत्यर्धेन अन्यपरेणापि चूडामण्युक्तं खेचरीस्वरूपं भङ्ग्या सूचितम् ॥ ५ ॥

तदत्र मुद्रामन्त्रवीर्यासादनेऽपि—

गुरुरुपायः ॥ ६ ॥

गृणाति उपदिशति तात्त्विकमर्थमिति गुरुः; सोऽत्र व्याप्तिप्रदर्शकत्वेन[33] उपायः । तदुक्तं श्रीमालिनीविजये

'स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ।'

इति । स्पन्दे तु एवमादिप्रसिद्धत्वात्[34] न संगृहीतम् ।

'अगाधसंशयाम्भोधिसमुत्तरणतारिणीम् ।
वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ॥'

इति-पार्यन्तिकोक्त्या च एतदपि संगृहीतमेव ।

---

३३ व्याप्तिरत्र मुद्रावीर्य-मन्त्रवीर्यस्वरूपा ।

३४ गुर्वादिप्रसिद्धेरित्यर्थः । तथा अन्यत्रापि

'यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः ।
उभयोरन्तरं नास्ति गुरोरपि शिवस्य च ॥'

इति ।

गुरुर्वा पारमेश्वरी अनुग्राहिका शक्तिः । यथोक्तं श्रीमालिनीविजये

'शक्तिचक्रं तदेवोक्तं गुरुवक्त्रं तदुच्यते ।'

इति । श्रीमत्त्रिशिरोभैरवेऽपि

'गुरोर्गुरुतरा शक्तिर्गुरुवक्त्रगता भवेत् ।'

इति । सैव अवकाशं ददती उपायः ॥ ६ ॥

तस्माद्गुरोः प्रसन्नात्—

मातृकाचक्रसंबोधः ॥ ७ ॥

शिष्यस्य भवतीति शेषः । श्रीपरात्रिंशकादिनिर्दिष्टनीत्या अहंविमर्शप्रथमकला[३५] अनुत्तराकुलस्वरूपा, प्रसरन्ती आनन्दस्वरूपा[३६] सती, इच्छेशनभूमिकाभासनपुरःसरं,[३७] ज्ञानात्मिकामुन्मेषदशां ज्ञेयाभासासूत्रणाधिक्येन च ऊनतां[३८]

---

३५ इह खलु अनाख्यपरामर्शात्मा अनुत्तरः शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णुः परप्रकाश एव परं तत्त्वं; स एव च स्वातन्त्र्यात् विश्वमवबिभासयिषुः स्वात्मनि शिवशक्तिरूपतामवभासयति; तस्य शिवलक्षणस्य तत्त्वस्य अव्यभिचरितस्वभावा पूर्णाहन्तात्मा अनुत्तरा कुलस्वरूपा शक्तिरस्तीति । एवं च अकारलक्षणं कुलं शरीरमस्य-इति आद्यवर्णोऽभिहितः ।

३६ आकाररूपा ।

३७ इरूपाम्, ईरूपां च । इच्छान्तं तावत् अहं-विमर्श एव प्रथमकलारूप इत्यर्थः ।

३८ उन्मेषदशाम् उकाररूपाम्; ऊनताम् ऊकाररूपाम् ।

प्रदर्श्य, इच्छामेव द्विरूपां[39] विद्युद्विद्योतनकल्पतेजोमात्ररूपेण, स्थैर्यात्मना च एषणीयेन रञ्जितत्वात् र-लश्रुत्या आरूषितेन, अत एव स्वप्रकाशात्मीकृतमेयाभासत्वतः अमृतरूपेण, मेयाभासारूषणमात्रतश्च बीजान्तरप्रसवासमर्थतया, षण्ढाख्यबीजचतुष्टयात्मना रूपेण प्रपञ्च्य, प्रोक्तानुत्तरानन्देच्छासंघट्टेन त्रिकोणबीजम्[40], अनुत्तरानन्दोन्मेषयोजनया च क्रियाशक्त्युपगमरूपमोकारं[41], प्रोक्तैस्तद्बीजद्वय[42]संघट्टेन षट्कोणं शूलबीजं[43] च, इच्छाज्ञानशक्तिव्याप्तपूर्णक्रियाशक्तिप्रधानत्वात् शक्तित्रयसंघट्टनमयं प्रदर्श्य, इयत्पर्यन्तविश्वैकवेदनरूपं बिन्दुमु-

---

३९ यथा विद्युतो विद्योतनं तस्या एव मनाक् आधिक्यम्, तथा सैव इच्छा ऋकारतामापन्ना विद्युदिव; तस्या एव विद्योतनं मनागाधिक्यं च ॠ इति, र-श्रुतिश्च वह्निबीजं तेजोरूपम् । एवं विद्युत्कल्पा एव इच्छा ऌ इति; तस्या विद्योतनकल्पं ॡ इति मनागधिकं, ल-श्रुतिश्च स्थैर्यात्म पृथिवीबीजम् । एवं तेजः-स्थैर्यरूपेण एषणीयेन इच्छाया रञ्जितत्वात् षण्ढस्वराणां चतुर्णां तेजोमात्ररूपे र-श्रुतौ, स्थैर्यरूपे ल-श्रुतौ वा सामर्थ्यं द्वितय एव, नान्यत्र इति ।

४० त्रिकोणबीजम् एकारः, स एव योनिबीजमिति ।

४१ निर्माणशक्त्यङ्गीकाररूपम् ।

४२ ए-ओ इत्येतद्बीजद्वयम् ।

४३ त्रिशूलबीजम् ऐ-औ इत्येतन्मात्मकमित्यर्थः ।

न्मील्य, युगपदन्तर्बहिर्विसर्जनमयविन्दुद्वयात्मानं विसर्गभूमिमुद्दर्शितवती, अत एव अन्तर्विमर्शनेन अनुत्तरे एव एतद्विश्वं विश्रान्तं दर्शयति, बहिर्विमर्शेन तु कादि-मान्तं पञ्चक-पञ्चकं अ-इ-उ-ऋ-ऌशक्तिभ्यः[44] पुरुषान्तं समस्तं प्रपञ्चयति। एकैकस्याश्च शक्तेः पञ्चशक्तित्वमस्ति, इत्येकैकतः पञ्चकोदयः। आभ्य एव शक्तिभ्यः[45] शिक्षोक्त[46]संज्ञानुसारेण अन्तः-पुंभूमौ नियत्यादिकञ्चुकत्वेन अवस्थानात् अन्तस्थाख्यान्प्रमातृभूमिधारणेन विश्वधारणात् धारणाशब्देन आम्नायेषु उक्तान्, तदुपरि भेदविगलनेन अभेदापत्त्या उन्मिषितत्वात् ऊष्माभिधानान् चतुरो वर्णानाभासितवती। अत्र[47] च अन्ते सर्वस्रष्टिपर्यन्तवर्ति परिपूर्णममृतवर्ण[48]

---

४४ चिदानन्देच्छाज्ञानक्रिया हि पञ्च शक्तयः वर्णसंनिवेशोल्लासिका इत्यर्थः।

४५ उक्तचिदादिभ्यः सर्ववर्णमूलभूताभ्यः इत्यर्थः।

४६ व्याकरणादि-शिक्षोक्तक्रमेण प्रमातृभूमौ नियति-कला-विद्या-राग-इत्यादिभिः अन्तरवतिष्ठमानत्वात् अन्तःस्थसंज्ञामुपलभमानान् य-र-ल-व-इत्यादीन् वर्णान् प्रथमकलैव आभासितवती इति भावः।

४७ अत्रेति ऊष्माक्षरेषु श-ष-स-ह इत्येतेषु।

४८ मेयरूपं भोग्यम्।

प्रदर्श्य, तदन्ते प्राणबीजप्रदर्शनं कृतम्; तत् अनुत्तरशक्त्याप्यायितानाहतमयम्[49], इयद्वाच्य[50]-वाचकरूपं षडध्वस्फारमयं विश्वम्; इति प्रत्यभिज्ञापयितुम् । अत एव प्रत्याहारयुक्त्या अनुत्तरानाहताभ्यामेव शिवशक्तिभ्यां गर्भीकृतम् एतदात्मकमेव विश्वम्; इति महामन्त्रवीर्यात्मनोऽहंविमर्शस्य तत्त्वम् । यथोक्तमस्मत्परमेष्ठिश्रीमदुत्पलदेवपादैः

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।
उक्ता सैव च विश्रान्तिः सर्वापेक्षानिरोधतः ॥
स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च ।'

इति । तदियत्पर्यन्तं यन्मातृकायास्तत्त्वं तदेव ककार[51]-सकारप्रत्याहारेण अनुत्तरविसर्गसंघट्टसारेण कूटबीजेन प्रदर्शितमन्ते; इत्यलं रहस्यप्रकटनेन । एवं-विधायाः

'......................न विद्या मातृकापरा ।'

इत्याम्नायसूचितप्रभावाया मातृकायाः संब-

---

४९ ह-कलात्मकम् ।

५० वाचकं मन्त्र-वर्ण-पदाध्वरूपं, वाच्यं कला-तत्त्व-भुवनाध्वरूपम् ।

५१ अनुत्तरात्मकः ककारः, विसर्गात्मकः सकारः, तत्संघट्टात्मा क्ष-इति कूटवर्णः ।

न्धिनश्चक्रस्य प्रोक्तानुत्तरानन्देच्छादिशक्तिसमूहस्य चिदानन्दघनस्वस्वरूपसमावेशमयः सम्यक् बोधो भवति। एतच्चेह दिङ्मात्रेणोट्टङ्कितम्[५२]। विततं तु अस्मत्प्रभुपादैः श्रीपरात्रिं-

---

५२ उट्टङ्कितं सूचितम्। तथा च अयमत्र स्फुटो वर्णनिर्णयः। अ-इति अनुत्तरप्रथमकला अकुलस्वरूपा पूर्णाहन्ता। आ-इति तस्यामेव विश्रान्तिः; अत एव अकारद्वयमेलापनस्वरूपा आनन्दशक्तिः। इ-इति शिवसामरस्यरूपे संघट्टे बहिरुल्लिलसिषारूपा अघोराख्या इच्छाशक्तिः। ई-इति सैव ईशित्री सती स्वात्मविश्रान्तेव, अत एव इकारद्वितयसंधिरूपता। उ इति इच्छायां बहिरौन्मुख्ये सति विश्वोन्मेषरूपा ज्ञानशक्तिः। ऊ इति तस्यां दर्पणनगरवत् अभिन्नायां सत्यां ज्ञेयस्याधिक्यात् संवित्तत्त्वस्य ऊनतावभासित्वम्। ऋ-ॠ-इति इच्छायाः खलु द्विप्रकारायाः शून्यभुवमधिशयानाया ज्ञानशक्तिसाचिव्येन तेजःस्पर्शित्वात् र-श्रुत्या विद्युद्वत् विद्योतनवच्च अवभासित्वम्। ऌ-ॡ-इति तस्या एव अत्यन्तं शून्यभुवि प्रसरन्त्याः किंचित् ज्ञानशक्तिराहित्येन काष्ठपाषाणरूपतामिव आददानाया ल-श्रुत्या स्थैर्यात्मकत्वेन विद्युद्विद्योतनकल्पमवभासनम्, अत एव स्वात्ममात्रविश्रान्तित्वेन एषाममृतात्मकत्वम्; बहिरौन्मुख्याभावात् बीजान्तरप्रसवासमर्थत्वेन नपुंसकताव्यपदेशः। ए-इति अनुत्तरानन्दयोरिच्छायां प्रसरतोः अनुत्तरप्राधान्यात् त्रिकोणबीजम्, इच्छाज्ञानक्रियाणां साम्यात्। ऐ-इति तयोरेव इच्छायामीशित्र्यां च अत्यन्तप्रसरणात् दीर्घीभवनं, मात्राधिक्यात्। ओ-इति अनुत्तरानन्दयोः बहिरुल्लसितुमिच्छया ज्ञानशक्तौ विश्वोन्मेषावस्थायां प्रसरणरूपम्। औ-इति अस्यैव अत्यन्तं दैर्घ्यात् इच्छाज्ञानक्रियाणां स्फुटतया त्रिशूलबीजत्वम्। अं-इति एवमियत्पर्यन्तस्य विश्वस्य वेदनात्मकत्वेन बिन्दुतया प्रथमं शक्तिमत्परामर्शः। अः-इति पूर्वोक्तस्य अनुत्तरस्यैव आनन्दशक्त्यविभक्तस्य विसर्गरूपतया शक्ति-

शकाविवरण-तन्त्रालोकादौ प्रकाशितम् । उक्तं च श्रीसिद्धामृते

'सात्र[५३] कुण्डलिनी बीजजीवभूता चिदात्मिका ।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥

---

प्राधान्यपरामर्शः। परमेश्वरस्य शक्तयः पञ्च । तासामेकैकस्याः अपि शक्तेः पञ्चकयोगः । तेन अनुत्तरात् प्रसृतस्य कवर्गस्य, इच्छायाः स्वरूपस्थाया जातस्य चवर्गस्य, अलुब्धलुब्धात्मद्विप्रकाराया इच्छाया उद्भूतस्य टवर्गस्य तवर्गस्य च, उन्मेषात् उत्पन्नस्य पवर्गस्य पञ्चकत्वम्। तत्र अवर्गस्य अधिष्ठात्री ब्राह्मी। कवर्गस्य माहेश्वरी, पृथ्वी-जल—तेजो—वायु—आकाशानि इति भूतपञ्चकस्वभावता च । चवर्गस्य वाराही अधिष्ठात्री, गन्ध—रूप—रस—स्पर्श—शब्दाः इति तन्मात्रपञ्चकत्वं च। टवर्गस्य अधिष्ठात्री कौमारी,उपस्थ—पायु—पाद—पाणि—वाचः इति कर्मेन्द्रियपञ्चकता च । तवर्गस्य अधिष्ठात्री चामुण्डा, घ्राण—जिह्वा—चक्षुः—त्वक्—श्रोत्राणि इति ज्ञानेन्द्रियपञ्चकत्वं च। पवर्गस्य अधिष्ठात्री चर्चिका, मनो-बुद्धि-अहंकार-प्रकृति-पुरुषतत्त्वानि इति पञ्चकत्वं च। अन्तस्थानां नियति-राग-कला-विद्यातत्त्वचतुष्कत्वम्, माया-कालयोरत्रैव अन्तर्भावः । श-ष-सकाराणामीश्वर-सदाशिव-शक्तित्वम् । ह-इति पूर्वोक्तस्य विसर्गस्यैव स्थूलता । तदेवमनुत्तर-हकारयोः प्रत्याहारे निखिलं वाच्यवाचकमयं षडध्वरूपं विश्वम् अनुत्तर एव विश्राम्यति, इति—दर्शयितुम् अनुत्तरात्मकस्य ककारस्य, सकारस्य च शक्तिमयस्य संघट्टात्मतया कूटबीजस्य अन्ते प्रदर्शनं कृतमिति वर्णनिर्णयः ।

५३ सा पारमेश्वरी संविन्मात्ररूपा विसर्गशक्तिरेव गर्भीकृतनिखिलविश्वत्वात् कुण्डलिनीशब्दव्यपदेश्या अनच्ककलारूपा वाच्यवाचकात्मनि अत्र विश्वत्र अविद्यादेः तत्कारणत्वे दूरापास्तत्वात् बीजभूता; तत्त्वेऽपि संविन्निष्ठत्वात् सर्वव्यवस्थितीनां जीवभूता; नहि संविदमन्तरेण किंचिदपि स्फुरेदिति भावः। तदेवं-विधायाश्च तस्याः सकाशात् अनुत्तरेच्छाज्ञानाख्यं परामर्शत्रयं जातम्; ततश्च परामर्शत्रयात् उक्तनीत्या निखिलपरामर्शान्तरोदयः ।

आ इत्यवर्णादित्यादि यावद्वैसर्गिकी कला ।
ककारादिसकारान्ताद्विसर्गात्पञ्चधा स च ॥
वहिश्चान्तश्च हृदये नादेऽथ परमे पदे ।
विन्दुरात्मनि मूर्धान्ते हृदयाद्व्यापको हि सः ॥
आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ।

---

५४ एकः इति-शब्दः स्वरूपपरामर्शकः, अपरः प्रकारे; तेन अनुत्तरात् आनन्दो यथा जातः, एवमिच्छातः ईशित्री; उन्मेषादूनता; यावत् ककारादिः सकरान्तो यस्याः एवं-विधा हकारात्मिका वैसर्गिकी कला जाता, निखिलमेव वर्णजातमुदितमित्यर्थः । मकारान्तेति वक्तव्ये ककारादि-इत्यतःप्रभृति सकारपर्यन्तं व्यञ्जनरूपत्वं, कवर्गस्य अनुत्तरात् जन्मापि द्योतयितुमुक्तम् । 'अ-कु-ह-विसर्जनीयानां कण्ठः' इत्यादिनीत्या कवर्गहकारविसर्जनीयानामकारादेव उत्पत्तिः । 'वैसर्गिकी कला' इति सामान्योक्तेः परापरो हि विसर्जनीयात्मा विसर्गः कटाक्षितः । एतच्च सर्वं विसर्गादुत्पन्नं, विसर्ग एव तत्तदामर्शात्मना स्फुरित इत्यर्थः । स एव हि परप्रमात्रेकरूपोऽशेषविश्वक्रोडीकारेण अनुत्तरहकारात्मना प्रस्फुरन् अन्तर्बहीरूपतया नर-शक्ति-शिवात्मतामाभासयेत्; अत आह 'पञ्चधा स च' इति । चो हेतौ; यतः स विसर्ग एव विन्दुः, विदि-क्रियायां स्वतन्त्रः प्रमाता बहीरूपतया हृदये नररूपतया, बहीरूपत्वेऽपि अन्तारूपतायामेव विश्रान्तेः; नादे शक्तितया, अन्तारूपतया परमे पदे द्वादशान्ते शिवतया, प्रस्फुरन् पञ्चप्रकारः । अत एव शरीरेऽपि हृदयात् मूर्धान्तं हृत्कण्ठ-ललाट-शक्त्यन्त-द्वादशान्तेषु अर्थात् व्यवस्थितः । एवं पञ्चधात्वेऽपि अस्य वस्तुतः त्रैरूप्ये एव पर्यवसानमिति न पूर्वापरव्याहतत्वं किंचिदाशङ्कनीयम् । ननु एक एव असौ कथं हृदादौ वर्तते ? इत्यत आह 'व्यापको हि सः' इति । आ इत्यवर्णेति पद्यद्वयस्यार्थो निर्दिष्टः ।

५५ न केवलं मातृकाया एव परमन्त्रवीर्यात्मत्वेन अज्ञाताया नैष्फल्यं, यावत् मननत्राणधर्माणां मन्त्राणामपि इत्याह आदिमेति,

[56]गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ॥
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः।
श्लोकगाथादि यत्किञ्चिदादिमान्त्ययुतं यतः ॥
तस्माद्विदंस्तथा सर्वं मन्त्रत्वेनैव पश्यति।'

इति। एतच्च स्पन्दे

[58]'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥'

इत्यनेनैव भङ्ग्या सूचितम् ॥ ७ ॥

---

तुशब्दः चार्थे। आदिमः अनुत्तरः, अन्त्यो हकारः, तेन मन्त्राः अहं-परामर्शरूपादिमान्त्यविहीनाः तद्रूपत्वेन अपरिज्ञायमानाः शरदभ्रवत् स्युः, अकिंचित्करा एव इत्यर्थः। अन्यथा पुनः अहं-परामर्शात्म-परमन्त्रवीर्यात्मत्वेन परिज्ञायमानाः तत्तत्स्वकार्यकारिणो भवेयुः इति तात्पर्यार्थः।

५६ एतत्परिज्ञानमेव गुरोर्मुख्यं लक्षणमित्याह गुरोरिति। एवं-ज्ञानित्वादियोगात् द्योतनस्वभावो विश्वनिर्भरः अहमिव सर्वेषां पूज्यः, इति भगवदुक्तिः।

५७ एवं-विधो गुरुः न केवलं स्वभावत एव परिस्फुरत्परशक्तिवीर्यात्मनो मन्त्रानेव वेत्ति, यावत् किंचन लौकिकमपि श्लोकादि, इत्याह श्लोकेति। स खलु गुरुः तस्मात् निरतिशयज्ञानयोगात् सर्वं यत्किंचन बाह्यं श्लोकादि तथा अहं-परामर्शत्वेन परामृशन्, मन्त्रत्वेनैव सर्ववेत्तृत्वात्मकमनन-संसार्यनुग्रहात्मक-त्राणरूपकार्यकारितया साक्षात्करोति, यतः तदपि आद्यमान्त्ययुतम् अहंपरामर्शरूपमेव इत्यर्थः। नहि प्रकाशात्मपरप्रमातृरूपतामन्तरेण किंचिदपि स्फुरेदिति भावः।

५८ मातृकातत्त्वपरिज्ञानवतामेव योगिनाम् इयं शक्तिः भुक्तिमुक्तिलक्षणां सिद्धिं यच्छेत्, अन्यथा तत्तद्वाचकानुवेधद्वारेण हर्षशोकादिरूपतामादधाना बन्धकारिणी एव पशूनाम्, इति भुक्तिमुक्तिलक्षणफलायोगात् निष्फलैव भवेदिति पिण्डार्थः।

ईदृशस्य अस्य मातृकाचक्रसंबोधवतः—

शरीरं हविः ॥ ८ ॥

सर्वैश्वर्यप्रमातृत्वेन अभिषिक्तं स्थूलसूक्ष्मादिस्वरूपं शरीरं तत् महायोगिनः परस्मिन् चिदग्नौ हूयमानं हविः, शरीरप्रमातृताप्रशमनेन सदैव चिन्मातृताभिनिविष्टत्वात् । यदुक्तं श्रीविज्ञानभैरवे

'महाशून्यालये वह्नौ भूताक्षविषयादिकम् ।
हूयते मनसा साकं स होमः स्रुक्च चेतना ॥'

इति । श्रीतिमिरोद्घाटेऽपि

'यः प्रियो यः सुहृद्बन्धुर्यो दाता योऽतिवल्लभः ।
तदङ्गभक्षणाद्देवि ह्युत्पतेद्गगनाङ्गना ॥'

इति । अत्र हि देहप्रमातृताप्रशमनमेव पिण्डार्थः । श्रीमद्भगवद्गीतास्वपि

---

५९ महाशून्यस्य, शून्यातिशून्यपदस्य आ समन्तात् लयो यत्र परतत्त्वात्मनि वह्नौ, तत्र भूतेन्द्रिय-विषय-भुवन-तत्त्वादिरूपं जगत् तद्विभागकल्पनाहेतुना मनसा सह, चेतना विश्वानुसंधात्री शक्तिरेव स्रुक् तया, हूयते यत् स होमः, अग्नौ हविर्दानमित्यर्थः । 'चितिः स्रुक् चित्तमाज्यम्' इत्यादि श्रुतेः ।

६० स्वात्मार्थानुकूल्यस्य आश्रयभूतेषु प्रिय-पुत्रादि-रूपेषु धर्मिषु स्थितानां प्रियत्वादिधर्मरूपाणामङ्गानां भक्षणात्, तदहन्तादिप्रशमनात् योगी प्रत्ययसृष्टिं भुङ्क्ते इत्यर्थः ।

'सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञान[61]दीपिते ॥'

इति । स्पन्दे तु

'यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ।'

इत्यनेनैव संगृहीतम् । क्षोभो देहाद्यहंप्रत्ययरूपः, इति हि तद्वृत्तौ भट्टश्रीकल्लटः ॥ ८ ॥

अस्य च—

## ज्ञानमन्नम् ॥ ९ ॥

यत्पूर्वं 'ज्ञानं बन्धः' (१–२) इत्युक्तं तत् अद्यमानत्वात्, ग्रस्यमानत्वात् योगिनामन्नम् । यत्संवादितं प्राक्

'मृत्युं च कालं च कलाकलापं
विकारजातं प्रतिपत्तिसात्म्यम् ।
ऐकात्म्य-नानात्म्यवितर्कजातं
तदा स सर्वं कवलीकरोति ॥'

इति ।

[62]अथ च यत्स्वरूपविमर्शात्मकं ज्ञानं तत्

---

६१ सर्वान् इन्द्रियव्यापारान्, मानसान्, मुखनासिकानिर्गमनादीन् वायवीयान् व्यापारान् च आत्मनो मनसः संयमहेतौ योगनाम्नि ऐकाग्र्य-वह्नौ सम्यक् ज्ञानपरिदीपिते निवेशयन्ति, गृह्यमाणं विषयं संकल्प्यमानं वा तदेकाग्रतयैव परित्यक्तान्यव्यापारतया बुद्ध्या गृह्णन्ति इति तात्पर्यम् ।

६२ उक्तार्थविषये अर्थान्तरमादिशति ।

अस्य अन्नं, पूर्णपरितृप्तिकारितया स्वात्मविश्रान्तिहेतुः। तदुक्तं श्रीविज्ञानभैरवे

'अत्रैकतम[६३]युक्तिस्थे योत्पद्येत दिनाद्दिनम् ।
भरिताकारिता सात्र तृप्तिरत्यन्तपूर्णता ॥'

इति । यु[६४]क्तिर्हि तत्र द्वादशोत्तरशतभूमिकाज्ञानरूपैव । एतच्च स्पन्दे

'प्रबुद्धः[६५] सर्वदा तिष्ठेत्.................. ।'

इत्यनया कारिकया संगृहीतम् ॥ ९ ॥

यदा तु एवं सततावहितो न भवति, तदा ज्ञानवतोऽपि अस्य अवधानावलेपात्—

## विद्यासंहारे तदुत्थस्वप्नदर्शनम् ॥ १० ॥

प्रोक्तज्ञानस्फाररूपायाः शुद्धविद्यायाः संहारे, निमज्जने, तदुत्थस्य, क्रमात्क्रमन्यकृतविद्यासंस्कारस्य स्वप्नस्य, भेदमयस्य विकल्पप्रपञ्चरूपस्य दर्शनं, स्फुटम् उन्मज्जनं भवति। तदुक्तं श्रीमालिनीविजये

---

६३ द्वादशोत्तरशतभूमिकासु एकतमस्यां भूमिकायां समाहितमनसो योगिनो या विश्वभरितात्म-भैरवावस्था सा तृप्तिरित्यर्थः ।

६४ शाम्भव-शाक्ताणवाख्योपायत्रयस्य भिन्नतया निर्दिष्टत्वात् इयत्संख्याक-भूमिकाप्रत्ययात्मिका ।

६५ असंकुचितस्वातन्त्र्यशक्तिरित्यर्थः ।

'न चैतदप्रसन्नेन शङ्करेणोपदिश्यते ।
कथञ्चिदुपदिष्टेऽपि वासना नैव जायते ॥'

इत्युपक्रम्य

'वासनामात्रलाभेऽपि योऽप्रमत्तो न जायते ।
तमनित्येषु भोगेषु योजयन्ति विनायकाः[६६] ॥'

इति । तदेतत्

'अन्यथा तु स्वतन्त्रा स्यात्सृष्टिस्तद्धर्मकत्वतः ।
सततं लौकिकस्येव जाग्रत्स्वप्नपदद्वये[६७] ॥'

इत्यनेन स्पन्दे संगृहीतम् । अतश्च नित्यं शुद्धविद्याविमर्शनपरेणैव योगिना भाव्यम् इत्युपदिष्टं भवति । यथोक्तम्

---

६६ विनायकाः तत्तद्दिव्यगण-दिव्यभोगभूमिकाद्यधिष्ठातारः परसिद्धिविघ्नोद्युक्ताः, ऋतम्भराप्रज्ञावतो ब्राह्मणस्य सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते । भो इहास्यतां, कमनीयोऽयं भोगः, कमनीयेयं कन्ता, रसायनमिदं जरामृत्यू बाधते, वैहायसमिदं यानं, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षय्यमजरममरस्थानं देवानां प्रियम्, इति पातञ्जलदर्शनोक्तप्रकारेण सविनयादरपूर्वं दिव्यवस्तुगुणानुकीर्तनतत्प्रदर्शनेन योगिनमनित्यभोगेषु प्रलोभयन्ते । तस्मात् परसिद्धिप्राप्तौ प्रत्यूहभूतत्वात् भोगेभ्यो विरज्येतेति भावः ।

६७ एकस्य स्वतन्त्रपरमेशितुः ममैव इदं विश्वम्-इति विश्वभरितसंवित्स्वरूपसमाधानपरित्यागेन योगिनः पदद्वये प्रसरद्दृक्क्रियात्मकतया विचित्रभ्रमदानसमर्थं नानाभाववैचित्र्यनिर्माणं पशोरिव दुर्निवारप्रसरमस्ति; नीलसुखादिसृष्ट्यैव अयं स्वायत्तीक्रियते इत्यर्थः । समाहितचेतसस्तु तत्र ज्ञानज्ञेयात्मभावेन स्फुरन्ती पारमेश्वरी शक्तिः चिन्मयस्वरूपावरणप्रतिबन्धाय न प्रगल्भते इति भावः ।

'तस्मान्न तेषु संसक्तिं कुर्वीतोत्तमवाञ्छया ।'

इति–श्रीपूर्वे । श्रीस्पन्देऽपि

'अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये ।
जाग्रदेव निजं भावमचिरेणाधिगच्छति ॥'[68]

इति । एवं 'चित्तं मन्त्रः' (२–१) इत्यतः प्रभृति मन्त्रवीर्य-मुद्रावीर्यानुसंधिप्रधानम्

'उच्चाररहितं वस्तु चेतसैव विचिन्तयन्[69] ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥'

इत्याम्नातं शाक्तोपायं विविच्य, अवधानावलिप्तं प्रति 'विद्यासंहारे तदुत्थस्वप्नदर्शनम्' (२–१०) इति सूत्रेण एतदनुषङ्गेण[70] आणवोपायप्रतिपादनस्य अवकाशो दत्तः । इति शिवम् ॥ १० ॥
आदितः सूत्रसंख्या ॥ ३२ ॥

इति श्रीमन्माहेश्वराचार्याभिनवगुप्तपादपद्मोपजीवि-श्रीक्षेमराजविरचितायां शिवसूत्रविमर्शिन्यां शाक्तोपायप्रकाशनं नाम द्वितीय उन्मेषः ॥ २ ॥

---

६८ शाक्ततत्त्वस्य स्वरूपाविर्भावाय सततमुद्युञ्जानो जागरावस्थायामेव निरावरणचिद्रसघनभैरवपरमार्थसत्तां संवेदयते इति ।

६९ दृढैकाग्र्येण विमर्शनविषयीकुर्वन् ।

७० भेदमयप्रपञ्चदर्शनस्य निमज्जने क उपाय इति प्रसंगेन ।

# शिवसूत्रविमर्शिनी।

अथ

तृतीयोन्मेषारम्भः।

इदानीमाणवोपायं[1] प्रतिपिपादयिषुः, अणोः तावत्स्वरूपं दर्शयति—

## आत्मा चित्तम् ॥ १ ॥

यदेतत् विषयवासनाच्छुरितत्वात् नित्यं त[2]दध्यवसायादिव्यापारबुद्ध्यहङ्कृन्मनोरूपं चित्तं, तदेव अतति[3], चिदात्मकस्वस्वरूपाख्यात्या स[4]त्त्वादिवृत्त्यवलम्बनेन योनीः संचरति, इति

---

१ आणवोपायो नाम पाशवव्यापारः। यदा तु असौ विकल्पः स्वसंस्कारार्थमुपायान्तरमपेक्षते, तदा बुद्धिप्राणादिकान् परिमितरूपान् उपायत्वेन गृह्णन् अणुत्वं प्राप्त आणवं ज्ञानमाविर्भावयति। तत् हि चित्तविश्रान्त्यात्मकम्। यदुक्तम्

'पूर्वं विसृज्य सकलं कर्तव्यं शून्यतानले।
चित्तविश्रान्तिसंज्ञोऽयमाणवः परिकीर्तितः ॥'

२ तदिति तेषां विषयाणां निश्चयाभिमानविकल्पाः।

३ अत सातत्यगमने इति पाठात्।

४ प्रकाशचाञ्चल्यावरणादीनां सत्त्वादिगुणकार्याणां वृत्त्याश्रयेण, प्रकाशो बुद्धिव्यापारः, चाञ्चल्यं मनसः, आवरणमहंकृतेः।

आत्मा अणुरित्यर्थः। न तु चिदेकरूपस्य अस्य अतनम्[५] अस्ति। अत एव 'चैतन्यमात्मा' (१–१) इति-स्वभावभूततात्त्विकैतत्स्वरूपप्रतिपादनाशयेन पूर्वमात्मा लक्षितः। इदानीं तु एतदीयसंकोचावभासप्रधानाणवदशौचित्येन, इति न पूर्वापरवैषम्यम् ॥ १ ॥

अस्य चित्तस्वरूपस्य अणवात्मनः—

ज्ञानं बन्धः ॥ २ ॥

सुखदुःखमोहमयाध्यवसाय[६]आदिवृत्तिरूपं तदुचितभेदावभासनात्मकं यत् ज्ञानं, तत् बन्धः। तत्पाशितत्वादेव हि अयं संसरति। तदुक्तं श्रीतन्त्रसद्भावे

'सत्त्वस्थो राजसस्थश्च तमस्थो गुणवेदकः।
एवं पर्यटते देही स्थानात्स्थानान्तरं व्रजन् ॥'

इति। एतदेव

'तन्मात्रोदय[७]रूपेण मनोऽहंबुद्धिवर्तिना।

---

५ नहि वस्तुतो नित्यविभुबुद्धस्वरूपस्य आत्मनः क्वचित् देशाद्यन्तरे गतिरित्यर्थः।

६ अध्यवसायो निश्चयः, आदिना विकल्पनाभिमानादि गृह्यते।

७ तन्मात्राणि स्थूलभूतकारणभावेन ईश्वरेच्छयैव अवभासिताः सूक्ष्माः शब्दादयः, तेषामुदयः स्थूलशरीरभावपरिणताकाशाद्यात्मना

पुर्यष्टकेन संरुद्धस्तदुत्थं प्रत्ययोद्भवम् ॥
भुङ्क्ते परवशो भोगं तद्भावात्संसरेत्....।'

**इत्यनेनानूदितम् ।**

'...........................................अतः ।
संसृतिप्रलयस्यास्य कारणं संप्रचक्ष्महे ॥'

**इत्येतत्प्रतिविधानाय स्पन्दशास्त्रे ॥ २ ॥**

---

अभिव्यक्तिः, तथा च यद्यत् नाड्यादि सुषिरं तदाकाशं शब्दतन्मात्रोदयः। यद्यत् सक्रियं प्राणादि स वायुः स्पर्शतन्मात्रोदयः। यद्यत् उष्णभास्वरादिरूपमग्न्यादि तत्तेजो रूपतन्मात्रोदयः। यद्यत् द्रवरूपं रुधिरादि ता आपः रसतन्मात्रोदयः। यद्यत् कठिनं मांसास्थिस्नाय्वादि सा पृथिवी गन्धतन्मात्रोदयः इति तन्मात्रोदयो रूपमाकारो यस्य तेन, मनोऽहंबुद्धिवर्तिना अनुभूयमानस्य आत्मलाभोऽनुभवश्च अन्तःकरणनिविष्टः, इति मनसि रजोगुणोदये, अहंकारे तमोगुणोदये, बुद्धौ च सत्त्वगुणोदयरूपायां वृत्तिर्वर्तनं यस्य तादृशेन, पुर्यां सूक्ष्मशरीरे तन्मात्रपञ्चकं गुणत्रयमिति स्थूलशरीरकारणभूतमष्टकं यत् संनिविष्टं तन्मुख्यं पुर्यष्टकं, तत्कार्यत्वात् स्थूलमपि शरीरं, तेन संरुद्धः तावन्मात्रमेव आत्मत्वेनाभिमन्यमानो विस्मृतसर्वात्मकत्वादिस्वसामर्थ्यवशात् बद्धः, अत एव परवशः सर्वशक्तिस्वभावव्यतिरिक्त-कारणान्तराधीनसकलसमीहितार्थसिद्धत्वात् अस्वतन्त्रः सन्, भोगं मायाभासितानादिनिजकर्मोपचित-वासनानुगुण-सुखादिसंवेदनात्मकतया पर्यवसितं स्वविषयमात्रं पुर्यष्टकोद्भूतं देहबन्धे भोगनिर्वृत्तेः हेतुतः प्रत्ययोद्भवं नियतस्वविषयज्ञानोत्पादरूपं यतः अयं पशुर्भुङ्क्ते अनुभवति स्वविषयमात्रभोक्तृताभिमानप्रत्ययोत्पादस्य भोगसद्भावात्, अतः तस्य स्थूलसूक्ष्मात्मपुर्यष्टकस्य विद्यमानत्वात् अप्रबोधे सति अनुच्छेदात् संसरेत् अनवरतं नानाशरीरभोगवासना-कर्मचक्रभ्रममनुभवेत् आ प्रबोधप्रत्युदयात्।

८ अतो हेतोः अस्य पशोः संसृतिक्षयस्य कारणमिति वैयधिकरण्येन षष्ठ्यौ व्याख्येये।

९ एतदिति भोक्तृत्वाभिमानात्मसंसृतिकारणस्य निराकरणाय।

ननु च

'ज्ञानं प्रकाशकं लोके आत्मा चैव प्रकाशकः ।
अनयोरपृथग्भावाज्ज्ञाने ज्ञानी प्रकाशते ॥'

इति-श्रीविज्ञानभैरवोक्तदृष्ट्या ज्ञानमपि प्रकाशमयमेव, इति-कथमस्य बन्धरूपत्वम्। सत्यमेतत्, यदि परमेश्वरप्रसादादेवं प्रत्यभिज्ञायेत, यदा तु तन्मायाशक्तितो नैवं विमर्शस्तदा—

## कलादीनां तत्त्वानामविवेको माया ॥ ३ ॥

किञ्चित्कर्तृतादिरूपकलादिक्षित्यन्तानां तत्त्वानां कञ्चुक-पुर्यष्टक-स्थूलदेहत्वेन अवस्थि-

---

१० ज्ञान इति, नीलाद्युपलम्भाध्यवसायादिपदे, ज्ञानी प्रकाशात्मा आत्मैव प्रस्फुरति, अनयोः ज्ञानिज्ञानयोरेकस्वभावात्। यदुक्तम्

'प्रकाशमानं न पृथक् प्रकाशात्
स च प्रकाशो न पृथग्विमर्शात् ।
नान्यो विमर्शोऽहमिति-स्वरूपाद्
अहंस्वरूपोऽस्मि चिदेकरूपः ॥' इति ।

पुनश्च । 'प्रकाशमाने परमार्थभानौ
नश्यत्यविद्यातिमिरे समस्ते ।
तदा बुधा निर्मलदृष्टयोऽपि
किंचिन्न पश्यन्ति भवप्रपञ्चम् ॥' इति ।

'ज्ञानं न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथङ् नहि ।
अतो न त्वितरत्किंचित्तस्माद्भेदो न वास्तवः ॥' इति च ।

तानां योऽयमविवेकः[11], पृथक्त्वाभिमतानामेव अपृथगात्मत्वेन प्रतिपत्तिः, सा माया तत्त्वाख्यातिमयः प्रपञ्चः । तदुक्तं श्रीतन्त्रसद्भावे

'कलोद्वलितचैतन्यो[12] विद्यादर्शितगोचरः ।
रागेण रञ्जितात्मासौ बुद्ध्यादिकरणैर्युतः ॥
एवं मायात्मको बन्धः प्रोक्तस्तस्यो[स्य द-]दरात्मकः ।
तदाश्रयगुणो धर्मोऽधर्मश्चैव समासतः ॥
तत्रासौ संस्थितः पाश्यः पाशितस्तैस्तु तिष्ठति ।'

इति । स्पन्दे तु

'अप्रबुद्धधियस्त्वेते[13] स्वस्थितिस्थगनोद्यताः ।'

इत्यनेन एतत् भङ्ग्या उक्तम् ॥ ३ ॥

---

११ परमार्थस्वरूपस्य अप्रथनस्वभावः ।

१२ कलया किंचित्कर्तृत्वलक्षणेन कलातत्त्वेन उद्वलितमपूर्णतां प्राप्तं चैतन्यं सर्वकर्तृत्वलक्षणं यस्य सः । विद्यया अल्पज्ञतात्मकेन विद्यातत्त्वेन दर्शिताः कमनीयतया प्रमेयभूमिकां नीता गोचरा इन्द्रियार्थाः । रागेण रागतत्त्वेन रञ्जितो विषयेषु साभिलाषीकृत आत्मा यस्य । तस्य पशोः दरात्मको मिताहन्तात्ममायीयमलस्वरूपो बन्धः । तदाश्रयेति मायीयबन्धाश्रयः शुभाशुभकर्मवासनास्वभावः । तत्रैव उभयरूपे मले, असौ बध्यते इत्यर्थः ।

१३ अप्रबुद्धा परमेश्वरपरानुग्रहविरहात् अविगलितगाढाज्ञाननिद्रा धीः येषां तान्, गुणादिस्पन्दनिःष्यन्दाः स्वस्मिन् परमात्मनि सामान्यस्पन्दमात्रकर्मके स्थितिः निर्विकल्पप्रतिपत्तिप्रभवा सुस्थिरा प्रतिष्ठा, तस्याः स्थगने सद्य एव आच्छादने गृहीतोद्योगाः, प्रतिपक्षभूतस्य प्रबोधस्य अभावात् लब्धप्रसरत्वात् एवमुपचरिताः, दारुणे दुर्लङ्घ्ये जन्मादिप्रबन्धमार्गे

अतश्च एतत्[१४]प्रशमाय—

## शरीरे संहारः कलानाम् ॥ ४ ॥

महाभूतात्मकं, पुर्यष्टकरूपं, समनान्तं यत् स्थूलं, सूक्ष्मं, परं शरीरं, तत्र याः पृथिव्यादि-शिवान्ततत्त्वरूपाः कला भागाः, तासां संहारः, स्वकारणे लयभा[१५]वनया दाहादिचिन्तनयु[१६]क्त्या वा ध्यातव्यः, इति शेषः । यदुक्तं श्रीविज्ञान-भैरवे

---

पातयन्ति इत्युत्तरेणान्वयः । अयमाशयः, यथा कांश्चित् राजादीन् प्रमादित्वाद्यवस्थासत्त्वात् सदपि सैन्यादिस्वसामर्थ्यं सत्त्वेन अप्रतिपद्यमानान् अन्तरप्रेक्षिणो विपक्षाः स्वपदव्यपरोपणबद्धाभियोगा महति व्यसने पातयन्ति आ स्वसामर्थ्यसद्भावप्रतिपत्तेः । एवमप्रबुद्धस्य सर्वकर्तृत्वादिलक्षणं निजं महिमानं सामान्यस्पन्दरूपं विद्यमानमपि अप्रतिबुध्यमानस्य सर्वकार्यपरतन्त्रं देहादिसर्गमेव आत्मत्वेन अवगच्छतः एते लब्धप्रसराः सुखितोऽहमित्यादयो गुणप्रधानाः प्रत्ययप्रवाहाः सत्ये स्वात्मनि स्थितिं व्यवधाय संसारमेव आसादयन्ति आ प्रबोधप्राप्तेः, इति प्रबुद्धा एव अस्योपदेशस्य विषया न अप्रबुद्धाः ॥

१४ एतदिति मायाबन्धनिवृत्त्यै ।

१५ यथा उपनिषदि 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी पृथिव्याः पुरुषः पुरुष एवेदं सर्वम्' इति यथाक्रमं यथास्वकारणमुत्पद्यन्ते । एवं व्युत्क्रमं तत्त्वानां पृथिव्यादिशिवान्तानां स्वकारणे लयो भाव्यते आरोहणक्रमेण ।

१६ निजापसव्यपादाङ्गुष्ठात् भावनया उत्थापितेन कालाग्निरुद्रेण रचितवपुःप्लोषणादियुक्तिः ।

'भुवनाध्वादिरूपेण[17] चिन्तयेत्क्रमशोऽखिलम् ।
स्थूलसूक्ष्मपरस्थित्या यावदन्ते मनोलयः ॥'

इति । तथा

'कालाग्निना कालपदादुत्थितेन[18] स्वकं पुरम् ।
प्लुष्टं विचिन्तयेदन्ते शान्ताभासः प्रजायते ॥'

इति । एवमादि च सर्वागमेष्वस्ति । अत एव

'उच्चारकरण[19]ध्यानवर्णस्थानप्रकल्पनैः ।
यो भवेत्स समावेशः सम्यगाणव उच्यते ॥'

इति-श्रीपूर्वशास्त्रे ध्यानादि एव आणवत्वेन उक्तम् । एतच्च स्थूलत्वात् शाक्तोपायप्रकाशात्मनि स्पन्दशास्त्रे न संगृहीतम् । यत्तु अत्र पर्यवसा[20]नभङ्ग्या शाक्तादि अस्ति, तत् अस्माभिः

---

१७ भेद-भेदाभेद-अभेदस्थित्या वा भुवन-तत्त्व-कलाध्वस्थित्या, अन्त इति भावनावसाने निर्विकल्पपदविश्रान्तिः । ध्यानाख्योऽयमाणवोपायः ।

१८ दक्षपादाङ्गुष्ठात्, पुरमिति शरीरम्, आभासः परिमितप्रमेयादिज्ञानम् ।

१९ उच्चारः स्थूलसूक्ष्मोभयरूपेण प्राणव्यापारः, करणं देहसंनिवेशविशेषात्मा मुद्रादिव्यापारः, ध्यानं बुद्धिव्यापारः, यदेतत् सर्वतत्त्वान्तर्भूतं स्वप्रकाशं परतत्त्वं तस्यैव निजहृदयबोधे विभावनम्, वर्णः सूक्ष्मप्राणोच्चारे स्फुरन् अव्यक्तानुकृतिप्रायो ध्वनिः सृष्टिसंहारबीजात्मा, स्थानं त्रिकोणकन्दहृदादि, एतदभ्यासात् परसंवित्तिलाभो भवति ।

२० विकल्पसंस्कारेण स्फुटतमविकल्पोन्मुखप्रेक्षिणि चित्तसंबोधलक्षणे शाक्तोपाये चित्तविश्रान्तिलक्षणस्य आणवोपायस्य पर्यवसानम्, इत्यर्थः ।

अत्रापि स्पन्दग्रन्थात् संवादितं; संवादयिष्यते च किंचित् ॥ ४ ॥

एवं ध्यानाख्यमाणवमुपायं प्रदर्श्य, तदेकयोगक्षेमान्[21] प्राणायाम-धारणा-प्रत्याहार-समाधीन् प्रदर्शयति—

नाडीसंहार-भूतजय-भूतकैवल्य-भूतपृथक्त्वानि ॥ ५ ॥

योगिना भावनीयानि इति शेषः । नाडीनां प्राणापानादिवाहिनीनां सुषीणां संहारः, प्राणापानयुक्त्या[22] एकत्र उदानवह्न्यात्मनि मध्यनाड्यां विलीनतोत्पादनम्[23] । यदुक्तं श्रीमत्स्वच्छन्दे

'अपसव्येन[24] रेचयेत सव्येनैव तु पूरयेत् ।
नाडीनां शोधनं ह्येतन्मोक्षमार्गपथस्य च ॥

---

२१ अप्राप्तस्य प्राप्तिर्नाम योगः, प्राप्तस्य परिरक्षणं नाम क्षेमः ।

२२ पूरकादिपरिशीलनेन बाह्यान्तरप्रसरद्रूपतापरिवर्जे संमेलनम् ।

२३ चिरकालं कुम्भकाभ्यसनेन सर्वनाडीषु विसरणः प्राणवायुरुदाने विलीयते तद्वाहित्वात् तासां नाडिसंहार इत्युपचर्यते इत्यर्थः ।

२४ सव्येन दक्षनासापथेन रेचकं कुर्यात्, अपसव्येन वामेन पूर्येत वायुपूरणं कुर्यात्, एवमनवरतं क्रियमाणमेतत् नाडीनां मोक्षमार्गपथस्य वा मध्यधाम्नः शोधनं मारुतप्रशमनं भवति ।

रेचनात्पूरणाद्रोधात्प्राणायामो[25] स्त्रिधा स्मृताः ।
सामान्या बहिरेते तु पुनश्चाभ्यन्तरे त्रयः ॥
आभ्यन्तरेण[26] रेचयेत पूर्येताभ्यन्तरेण तु ।
निःस्पन्दं कुम्भकं कृत्वा कार्याश्चाभ्यन्तरास्त्रयः ॥'

इति। भूतानां पृथिव्यादीनां जयो धारणाभिर्वशीकारः । यथोक्तं तत्रैव

'वायवी[27] धारणाङ्गुष्ठे आग्नेयी नाभिमध्यतः ।
माहेयी कण्ठदेशे तु वारुणी घण्टिकाश्रिता ॥
आकाशधारणा मूर्ध्नि सर्वसिद्धिकरी स्मृता ।'

इति । भूतेभ्यः कैवल्यं, चित्तस्य ततः प्रत्याहरणम् । यदुक्तं तत्रैव

---

२५ प्राणायाम इति, प्राणस्य यथास्थितवाहविजयेन स्वायत्ततानयनम् । एते त्रयः प्राणायामाः सर्वसाधारण्येन नासिकापथे क्रमेण निर्वर्त्यमानाः साधारणा बाह्याश्चेत्यर्थः ।

२६ मध्यपथेन अत्र रेचनं द्वादशान्ते, पूरणं हृदि, निष्कम्पं कुम्भकमिति निरायासं प्रशान्तकुम्भकमित्यर्थः, कार्या इति निर्वर्तनीया भवन्ति।

२७ पाददेशे तिर्यग्गतेः, नाभौ जाठराग्नेः, कण्ठे स्थितिपदे धरण्याः, घण्टिकायां रसस्य, ब्रह्मरन्ध्रे च व्योम्नः सद्भावात् तथैव च धारणा उक्ताः । अत्र च वर्णमण्डललाञ्छनाक्षरात्मकत्वं धारणाध्येयम्, प्रथमं कण्ठे पार्थिवीं धारणां बद्ध्वा हृदयात् उद्घातपञ्चकेन पञ्चगुणं पार्थिवं तत्त्वं भिन्द्यात् । ततोऽनेनैव क्रमेण हृदयादेव चतुर्भिरुद्घातैः चतुर्गुणमम्भस्तत्त्वं, ततो हृदयादेव नाभिक्षेत्रे त्रिभिः त्रिगुणमग्निम्, अनन्तरं हृदयादेव द्वाभ्यां पादाङ्गुष्ठगतं द्विगुणं वायुं, ततोऽपि अङ्गुष्ठात् संकोचयुक्त्या प्राणशक्तिमूर्ध्वमुद्बोध्य, हृदयादेव एकोद्घातयुक्त्या शरवत् ब्रह्मरन्ध्रस्थमेकगुणं व्योमग्रन्थिं भित्त्वा, द्वादशान्ते सर्वाः सिद्धयो भवन्ति ।

'नाभ्यां[28] हृदयसंचारान्मनश्चेन्द्रियगोचरात् ।
प्राणायामश्चतुर्थस्तु सुप्रशान्त इति स्मृतः ॥'

इति । हृदयान्नाभौ प्राणस्य, विषयेभ्यो मनसश्च तत्रैव संचारणादित्यर्थः । भूतेभ्यः पृथक्त्वं, तदनुपरक्तस्वच्छस्वच्छन्दचिदात्मता । यदुक्तं तत्रैव

'भित्त्वा[29] क्रमेण सर्वाणि उन्मनान्तानि यानि च ।
पूर्वोक्तलक्षणैर्देवि त्यक्त्वा स्वच्छन्दतां व्रजेत् ॥'

इति । 'भूतसंधानभूतपृथक्त्वविश्वसंघट्टाः' (१–२०) इति यत् पूर्वमुक्तम्, तत् शाम्भवोपायसमाविष्टस्य अयत्नतो भवति । इदं तु आणवोपायप्रयत्नसाध्यमिति विशेषः ॥ ५ ॥

एवं देह[30]शुद्धि-भूतशुद्धि-प्राणायाम-प्रत्याहा-

---

२८ निष्कम्पकुम्भकानन्तरं शनैः शनैः हृदयादधः संचारयुक्त्या प्राणं नाभ्यामेव नियम्येत्यर्थात्, तथा इन्द्रियगोचरात् तत्प्रत्याहारयुक्त्या नाभ्यामेव मनो नियम्य, मनोनियमपूर्वकं प्राणं नाभौ नियच्छतो योगिनः सुप्रशान्तः प्राणायामो भवति, तदनु निरुद्धवायुप्रकोपहरणाय नाभितो वामनासापुटेन मन्दं मन्दं विरेचयेत् इति भावः ।

२९ हृत्कण्ठादीनि सर्वाणि, उद्गतं मनो यस्मात् उन्मना तत्पर्यन्तानि स्थानानि, पूर्वोक्तलक्षणैः पञ्चप्रणवाधिकारोक्तैः भित्त्वा, अथ एतत्सर्वं त्यक्त्वा स्वच्छन्दतामेति गाढगाढोन्मनापदविश्रान्तिप्रकर्षात् तुर्यातीतदशालाभात् चिदानन्दघनपरभैरवसमावेशमनुभवति योगीन्द्र इत्यर्थः ।

३० स्वकारणे लयभावनया, कालाग्निना दग्धदेहादिभावनया वा देहशोधनमभिहितमस्ति ।

र-धारणा-ध्यान-समाधिभिर्या तत्तत्तत्त्वरूपा सिद्धिर्भवति सा मोहावरणात्, न तु तत्त्वज्ञानादित्याह—

## मोहावरणात्सिद्धिः ॥ ६ ॥

मोहयति इति मोह, माया; तत्कृतादावरणात् प्रोक्तधारणा[31]दिक्रमसमासादिता तत्तत्तत्त्वभोगरूपा सिद्धिर्भवति । न तु परतत्त्वप्रकाशः । यदुक्तं श्रीमल्लक्ष्मीकौलार्णवे

'[32]स्वयम्भूर्भगवान्देवो जन्मसंस्कारवर्जितः ।
निर्विकल्पं परं धाम अनादिनिधनं शिवम् ॥
प्रत्यक्षं सर्वजन्तूनां न च पश्यति मोहितः ।'

इति । विगलितमोहस्य तु

---

३१ आदिपदेन ध्यानसमाधी ग्राह्यौ ।

३२ अनन्योन्मुखप्रेक्षित्वात्मस्वातन्त्र्यशक्तिसमवेतो भगवान् विश्वोदयविलयादिक्रीडनशीलो द्योतनादिसतत्त्वश्च देवः चिद्घनः परमेश्वर एव स्वयं स्वेच्छयैव, न तु प्रयोजनान्तरापेक्षया, तत्तद्रुद्रक्षेत्रज्ञाद्यनन्तप्रमातृरूपवैचित्र्येण भवनशीलः स्फुरन् मायाप्रमातृतां समुल्लास्य विस्मृतस्वतन्त्रचिद्घनस्वभावो विचित्रपशु-पक्षि-नृ-सरीसृपादिजन्मनां संस्कारेण वासनया वर्जितः, स्वायत्तीकृत्य अस्वतन्त्रतां प्रापितः, अत एव मोहितो भिन्नवेद्यप्रथात्ममायीयपाशेन मलिनितः, सर्वजन्तूनां शिवप्रकाशमन्तरेण सत्तास्फुरत्तानुपपत्तेः प्रत्यक्षं चित्प्रकाशस्वभावं स्वात्मानं न पश्यति, न च परामृशति; इति वाक्यार्थः ।

'[33]मध्यमं प्राणमाश्रित्य प्राणापानपथान्तरम् ।
आलम्ब्य ज्ञानशक्तिं च तत्स्थं चैवासनं लभेत् ॥
[34]प्राणादिस्थूलभावं तु त्यक्त्वा सूक्ष्ममथान्तरम् ।
सूक्ष्मातीतं तु परमं स्पन्दनं लभ्यते यतः ॥
प्राणायामः स निर्दिष्टो यस्मान्न च्यवते पुनः ।
[35]शब्दादिगुणवृत्तिर्या चेतसा ह्यनुभूयते ॥

---

३३ उदानरूपं ज्ञानशक्तिरूपम्, उदानस्य प्राणीयभावनिमज्जनेन चिद्व्याप्त्युन्मज्जनात् ज्ञानशक्तिरूपत्वम् । न च भ्रमितव्यं, बुद्ध्यभावे कथं ज्ञानम् ? इति, तस्य सदोदितत्वात् । यदाहुः 'अख्यात्युल्लसितेषु भिन्नेषु भावेषु बुद्धिरुच्यते अभेदे चिन्मये बोध' इति । श्रीसोमानन्दपादा अपि

बुद्धिं विना कथं बोधः सा बुद्धिः प्रकृतेः प्रजा ।
न च तस्य तया योग इति चेदपरस्थितौ ॥
सा बुद्धिर्यत्पुनः सूक्ष्मं सर्वदिक्कं व्यवस्थितम् ।
ज्ञानं बोधमयं तस्य शिवस्य सहजं सदा ॥

इति । तां ज्ञानशक्तिम् उन्मिषत्स्फुरत्तारूपां संविदमालम्ब्य तत्स्थमेव आसनं योगी लभते, निजज्ञानशक्त्यासीनः चिन्महेशरूपो भवति ।

३४ प्राणापानसमानेषु यः स्थूलो रेचकपूरकादिस्वभावः तं त्यक्त्वा, अथेति, एतत्स्थूलप्राणायामानन्तरभाविनं सूक्ष्मम्, आन्तरं मध्यपथेन रेचनाचमनादिरूपं च तमुज्झित्वा यस्मात् सूक्ष्ममपि अतीतं, परमम् अप्राणाद्यचित्स्फुरत्तात्म स्पन्दनं लभ्यते तस्मात् तदेव परं स्पन्दनं यत् स एव स्थूलसूक्ष्मभेदभाजां प्राणानाम्, आयामः प्रशमितप्राधान्यावभासात्मा नियमः, निर्दिष्ट उत्कृष्टतया निरूपितः। यस्मादिति यं प्राणायाममासाद्य न पुनः च्यवते चित्प्रमातृमयतां न कदाचित् जहातीति ।

३५ शब्दस्पर्शादीनां गुणानां सत्त्वादिरूपाणां या काचित् वृत्तिर्दशा चेतसा संविदा अनुभूयते, तामनादरेण अपहस्त्य, स्वचेतसा अविकल्पसंवित्परामर्शनेनैव परचिद्धामप्रवेशः, हि इति यस्मात् भूमेः प्रसृतस्य चित्तस्य तत्प्रतीपप्रापणात्मा प्रत्याहारः, अतश्च भवपाशानां निकृन्तकः इत्यर्थः ।

त्यक्त्वा तां परमं धाम प्रविशेत्तत्स्वचेतसा ।
प्रत्याहार इति प्रोक्तो भवपाशनिकृन्तनः ॥

धीर्गुणान्समतिक्रम्य निर्ध्येयं परमं विभुम् ।[36]
ध्यात्वा ध्येयं स्वसंवेद्यं ध्यानं तच्च विदुर्बुधाः ॥

धारणा[37] परमात्मत्वं धार्यते येन सर्वदा ।
धारणा सा विनिर्दिष्टा भवपाशनिवारिणी ॥

स्वपरस्थेषु भूतेषु जगत्यस्मिन्समानधीः ।
शिवोऽहमद्वितीयोऽहं समाधिः स परः स्मृतः[38] ॥'

**इति श्रीमन्मृत्युजिद्भट्टारकनिरूपितनीत्या धारणादिभिरपि परतत्त्वसमावेश एव भवति, न तु मितसिद्धिः ॥ ६ ॥**

---

३६ बुद्धेः सत्त्वादिगुणान् समावेशेन प्रशमय्य, निर्ध्येयं ध्येयेभ्यो नियत्याकृत्यादिरूपेभ्यो निष्क्रान्तं, निष्क्रान्तानि च तानि यस्मात् तं, विभुं व्यापकमव्ययं नित्यं, स्वसंवेद्यं स्वप्रकाशं, ध्येयं ध्यानार्हम् । अथ च अध्येयम् अध्येतव्यं विम्रष्टव्यं स्मर्तव्यं च; अर्थात् चिदानन्दघनं परमेश्वरं ध्यात्वा विमृश्य तत्त्वज्ञाः तद्विमर्शात्मैव ध्यानम् अविच्छिन्नेन पारम्पर्येण जानन्ति, च एवार्थे ।

३७ येन योगिना सर्वदा परमात्मत्वं चैतन्यं समावेशेन अवलम्ब्यते, तस्य या धारणा चैतन्यविमर्शनात्मा वृत्तिः, सा भवबन्धविनाशे हेतुः धारणा अन्यधारणावैलक्ष्येण विनिर्दिष्टा । अथ च यया चिद्घनानन्दपरमात्मप्रकाशोपचयो भूयिष्ठो भवति सा धारणा; न तु भूतानामधिकरणेषु तत्तत्त्र्यस्रचतुरस्रादिस्वरूपानुभवनम् ।

३८ ग्राह्य-ग्राहकयुगलरूपतया स्थितेषु भावेषु सर्वमिदमहमेव इत्यहन्तेदन्तासामानाधिकरण्यात्मक-शुद्धविद्योत्थाध्यवसायरूपः समाधिः ।

तदाह—

## मोहजयादनन्ताभोगात्सहज-
## विद्याजयः ॥ ७ ॥

मोहस्य, अख्यात्यात्मकसमनान्तपाशात्मनो मायाया जयाद्, अभिभवात् । कीदृशात् ? अनन्तः, संस्कारप्रशमपर्यन्तः आभोगो, विस्तारो यस्य तादृशात्

'वेदनानादिधर्मस्य............... ।'

इत्यादिना निरूपितरूपायाः सहजविद्याया जयो, लाभो भवति । आणवोपायस्यापि शाक्तोपायपर्यवसानादित्युक्तत्वात्[३९] । तथा च श्रीस्वच्छन्दे

'समनान्तं[४०] वरारोहे पाशजालमनन्तकम् ।'

इत्युपक्रम्य

---

३९ ध्यानौपयिकस्य आणवसमाधानस्य शुद्धविकल्पोपाये शाक्ते परिविश्रमणात् इत्यर्थः ।

४० एकादशविधो मात्रो ध्वनिः, यथा अकारः उकारो मकारो विन्दुः अर्धचन्द्रो निरोधी नादो नादान्तः शक्तिः व्यापिनी समना इति; एतदवधेः सकारणषट्कस्य भेदप्रथात्मतया पाशजालकल्पस्य हेयता, अत ऊर्ध्वम् अभेदविमर्शात्मतया उपादेयता । वरारोह इति वर उत्कृष्ट आरोहः शक्तिद्वादशान्ते विश्रमणं यस्याः तत्संबुद्धिः ।

'पाशावलोकनं[41] त्यक्त्वा स्वरूपालोकनं हि यत् ।
आत्मव्याप्तिर्भवत्येषा शिवव्याप्तिस्ततोऽन्यथा ॥
सार्वज्ञ्याादिगुणा[42] येऽर्था व्यापकान्भावयेद्यदा ।
शिवव्याप्तिर्भवत्येषा चैतन्ये हेतुरूपिणी ॥'

इति-ग्रन्थेन आत्मव्याप्त्यन्तस्य मोहस्य जयात् उन्मनाशिवव्याप्त्यात्मनः सहजविद्यायाः प्राप्तिरुक्ता । यदुक्तं तत्रैव

'आत्मतत्त्वं ततस्त्यक्त्वा विद्यातत्त्वे नियोजयेत् ।
उन्मना सा तु विज्ञेया मनः संकल्प उच्यते ॥
संकल्पात्क्रमतो ज्ञानमुन्मनं युगपत्स्थितम्[43] ।
तस्मात्सा च परा विद्या यस्मादन्या न विद्यते ॥

---

४१ पाशानां समनान्तानाम् अवलोकनम् आत्मत्वेन अभिमननम्, स्वरूपं पाशोत्तीर्णचिन्मात्रत्वं यत्, एतावत्पर्यन्ता आत्मव्याप्तिः ।

४२ ये सर्वज्ञत्व-सर्वकर्तृत्वादिरूपा गुणा धर्माः परमोपादेयत्वेन अर्थ्यमानत्वात् अर्थाः, तान् व्यापकान् अशेषमन्तरभेदेन क्रोडीकुर्वतो यदा स्वान् भावयेत् तदा तद्भावनापरिनिष्पत्तिः आत्मनः शिवव्याप्तिः, सा च भावकस्य चैतन्ये हेतुरूपिणी प्रयोजिका; तत्प्रसादादेव शुद्धात्मनः तद्भावनाप्ररूढेः ।

४३ योजयेत् आत्मानमित्यध्याहारः, सा विद्या, संकल्प इच्छा, सा च ईशितव्यविश्वक्रमासूत्रणात्मत्वात् क्रमतो ज्ञानम् इत्युक्तम् । उन्मनम् उत्क्रान्तम् उत्कर्षं च मनः प्राप्तं यत्र तत् उन्मनम्; युगपत् इति विश्वस्य आसूत्रणावभासननिर्माणाद्यनन्तशाखाशतभिन्नस्यापि अत्र नित्योदितानन्दघनस्वातन्त्र्यशक्त्याभासात्मत्वेन अवस्थानात्, अत ईदृक् उन्मनं ज्ञानमेव उन्मनाशक्तिः ।

वेदनानादिधर्मस्य परमात्मत्वबोधना।
वर्जनापरमात्मत्वे तस्माद्विद्येति चोच्यते॥
तत्र[44]स्थो व्यञ्जयेत्तेजः परं परमकारणम्।'

इति॥ ७॥

एवमयमासादितसहजविद्यः—

## जाग्रद्द्वितीयकरः॥ ८॥

लब्ध्वापि शुद्धविद्यां तदैक[45]ध्येन्यासौ जागरूकः, पूर्णविमर्शात्मकस्वाहन्तापेक्षया यत् द्वि-तीय[46]मिदन्तावमृश्यं वेद्यावभासात्मकं जगत्, तत् करो रश्मिर्यस्य तथाविधो भवति। विश्वमस्य स्वदीधितिकल्पं स्फुरति इत्यर्थः। यथोक्तं श्रीविज्ञानभैरवे

'य[47]त्र यत्राक्षमार्गेण चैतन्यं व्यज्यते विभोः।
तस्य तन्मात्रधर्मित्वाच्चिल्लयाद्भरितात्मता॥'

४४ तत्रस्थो विद्यास्थोऽसंकुचितपरमशिवरूपं प्रत्यभिजानीयात्।

४५ तस्यां विद्यायाम् एकधाभाव ऐकध्यं तदैकाग्र्यम्।

४६ स्वानुभूतिप्रकाशापेक्षया द्वितीयं शक्तिरूपम्।

४७ यत्र यत्र नीलसुखादौ, अक्षमार्गेण चक्षुरादिसुषिरमार्गेण, विभोः परभैरवस्य आत्मनः चैतन्यं चित्प्रकाशो व्यज्यते स्फुरति; तस्य नीलादेः तन्मात्रधर्मित्वात् चैतन्यव्यतिरेके चेत्यत्वाभावापत्तेः दर्पणमात्रात्मकविचित्रप्रतिबिम्बवत् चैतन्यमात्रस्वभावत्वं विमृश्य विश्वभित्तिभूतायां चितावेव यो लीयते तस्य परभैरवतैव, यथा घनीभूतः प्रकाश एव सूर्यमण्डलं जातं तथा चिदेव हि आश्यानीभूता जगदात्मना भाति इत्याम्नायः।

इति । श्रीसर्वमङ्गलायामपि

'शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ॥'

इति ॥ ८ ॥

ईदृशश्चायं सर्वदा स्वस्वरूपविमर्शाविष्टः—

## नर्तक आत्मा ॥ ९ ॥

नृत्यति, अन्तर्विगूहितस्वस्वरूपावष्टम्भमूलं तत्तज्जागरादि[48]नानाभूमिकाप्रपञ्चं स्वपरिस्पन्दलीलयैव स्वभित्तौ प्रकटयति इति नर्तक आत्मा। तदुक्तं श्रीनैश्वासदेवीमहेश्वरनर्तकाख्ये सप्तमपटले देवीकृतस्तवे

'त्वमेकांशेनान्तरात्मा[49] नर्तकः कोशरक्षिता ॥'

इति । भट्टश्रीनारायणेनापि

'विसृष्ट[50]शेषसद्बीजगर्भं त्रैलोक्यनाटकम् ।
प्रस्ताव्य हर संहर्तुं त्वत्तः कोऽन्यः कविः क्षमः ॥'

---

४८ आदिना स्वप्नसुषुप्ते ग्राह्ये । इच्छादिशक्तिविजृम्भणपूर्वं निरुपादानहेतुनिचयं नानाभूमीः चिद्भित्तावेव उन्मीलयतीत्यर्थः ।

४९ आत्मैव पुर्यष्टकसंबन्धात् वासनारूपैः शुभाशुभैः निबद्धः सन् योनेर्योन्यन्तरं पर्यटन् आत्म-बाह्यात्मनोरन्तः व्यवस्थितत्वात् अन्तरात्मा ज्ञेयः, कोशरक्षितेति स्वस्वरूपपरमात्मत्वरक्षितेत्यर्थः ।

५० विसृष्टमशेषं सतां भावानां बीजं मायाप्रकृत्यादि गर्भं यस्य तत्;

इति । सर्वागमोपनिषदि श्रीप्रत्यभिज्ञायाम्

'संसारनाट्यप्रवर्तयिता सुप्ते जगति जागरूक
एक एव परमेश्वरः ॥'

इति ॥ ९ ॥

एवं-विधस्य अस्य जगन्नाट्यनर्तकस्य भूमिकाग्रहण-पदबन्धस्थानरङ्गमाह—

रङ्गोऽन्तरात्मा ॥ १० ॥

रज्यतेऽस्मिन् जगन्नाट्यक्रीडाप्रदर्शनाशयेनात्मना इति रङ्गः, तत्तद्भूमिकाग्रहणस्थानम्; अन्तरात्मा, संकोचावभाससतत्त्वः शून्यप्रधानः प्राणप्रधानो वा पुर्यष्टकरूपो देहापेक्षया[५१] आन्तरो जीवः । तत्र हि अयं कृतपदः स्वकरणपरिस्पन्द[५२]क्रमेण जगन्नाट्यमाभासयति । उक्तं च श्रीस्वच्छन्दे

---

नाटकपक्षे बीजादिसंज्ञा तच्छास्त्रप्रसिद्धा, संहर्तुं प्रशमयितुं, मुखसंधिना प्रस्तोतुं निर्वहणसंधिना निर्वाहयितुं च भवन्तमृते अन्यः कविः कवयिता कः प्रजापतिश्च क्षमः, न कोऽपि इत्यर्थः ।

५१ प्राणपुर्यष्टकनियन्त्रितो जीवः, जीवभावस्य पुर्यष्टकप्राण एव मुख्यत्वात् ।

५२ सहजस्वातन्त्र्यशक्तिविस्फुरणात्मा आन्तरेन्द्रियस्पन्दः ।

'पुर्यष्टकसमावेशाद्विचरन्सर्वयोनिषु[53] ।
अन्तरात्मा स विज्ञेयः............... ॥'

इति ॥ १० ॥

इत्थं अन्तरात्मरङ्गे नृत्यतोऽस्य–

## प्रेक्षकाणीन्द्रियाणि ॥ ११ ॥

योगिनश्चक्षुरादीनि इन्द्रियाणि हि संसार-नाट्यप्रकटनप्रमोदनिर्भरं स्वस्वरूपम् अन्तर्मुखतया साक्षात्कुर्वन्ति, तत्प्रयोगप्ररूढ्या विगलितविभागं चमत्काररससंपूर्णतामापादयन्ति[54]। यच्छ्रुतिः

'कश्चिद्धीरः प्रत्यगात्मानमैक्षद् आवृत्तचक्षुरमृतत्वमश्नन् ॥'
( कठोपनिषदि अ० २ । व० ४ । मं० १ )।

इति ॥ ११ ॥

अस्य च–

## धीवशात्सत्त्वसिद्धिः ॥ १२ ॥

धीः, तात्त्विकस्वरूपविमर्शनविशारदा [ वि-

---

५३ य एष कञ्चुकमात्रशरीरः प्रकृतिलीन आत्मा अयमेव आन्तर-सूक्ष्मशरीरारम्भक-तन्मात्रपञ्चक-मनोबुद्ध्यहंकारात्मकस्य पुर्यष्टकस्य संबन्धात् वासनावलितो योन्यन्तरगामी इत्यर्थः ।

५४ अहन्तारसचमत्कारपरिशीलनदार्ढ्यात् 'अहमिदं चमत्करोमि' इति विभागपरिवर्जं स्वात्मानं 'शिवोऽहमस्मि' इति परामृशन् चमत्कुरुते इत्यर्थः।

शदा ] धिषणा तद्वशात् सत्त्वस्य स्फुरत्तात्मनः सूक्ष्मस्य आन्तरपरिस्पन्दस्य सिद्धिरभिव्यक्तिर्भवति । नाट्ये च सात्त्विकाभिनयसिद्धिर्बुद्धि[55]कौशलादेव लभ्यते ॥ १२ ॥

एवं स्फुरत्तात्मकसत्त्वा[56]सादनादेव अस्य योगिनः—

सिद्धः स्वतन्त्रभावः ॥ १३ ॥

सिद्धः, संपन्नः; स्वतन्त्रभावः, सहजज्ञत्व-कर्तृत्वात्मकम् अशेषविश्ववशीकारि स्वातन्त्र्यम् । यदुक्तं श्रीश्रीनाथपादैः

'श्रयेत्स्वातन्त्र्य[57]शक्तिं स्वां सा श्रीकाली परा कला ।'

इति । श्रीस्वच्छन्देऽपि

---

५५ सात्त्विकरूपस्य अभिनयस्य सिद्धिरित्यन्वयः । सात्त्विकः स्तम्भ-स्वेद-रोमाञ्चादिरूपः । अभिनयः नटैः नाट्यादिभिः रामयुधिष्ठिरादीनामवस्थानुकरणम् । सात्त्विकेत्युपलक्षणं वाचिक-आङ्गिक-आहार्याणाम् ।

५६ स्वातन्त्र्यशक्तिविस्फुरणात्मनः सत्त्वस्य प्राप्तेरित्यर्थः ।

५७ 'पुरुषे षोडशकले तामाहुरमृतां कलाम् ।'

इत्युक्तस्वरूपा स्वातन्त्र्यशक्तिः, कलयति परामृशति, क्षिपति विसृजति संहरति च, गणयति, जानीते च इति—काली, विश्वस्य अन्तर्बहीरूपतया पालन-पूरणात्मकत्वात् परा-इत्यन्वर्था ।

'सर्वतत्त्वानि[58] भूतानि मन्त्रवर्णाश्च ये स्मृताः ।
नित्यं तस्य वशास्ते वै शिवभावनया सदा ॥'

इति ॥ १३ ॥

एष स्वतन्त्रभावोऽस्य—

**यथा तत्र तथान्यत्र ॥ १४ ॥**

यत्र देहे योगिनः स्वाभिव्यक्तिर्जाता तत्र यथा, तथा अन्यत्र सर्वत्र सदावहितस्य सा[59] भवति । यथोक्तं श्रीस्वच्छन्दे

'स्वच्छन्दश्चैव स्वच्छन्दः स्वच्छन्दो विचरेत्सदा[60] ।'

इति । श्रीस्पन्देऽपि

'लभते, तत्[61]प्रयत्नेन परीक्ष्यं तत्त्वमादरात् ।
यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा ॥'

इति ॥ १४ ॥

---

५८ सर्ववेद्योल्लासस्य शिवाभिन्नस्वात्मैक्येन परामर्शनात् जलाद्या-दीनि तत्त्वानि, भूतानि हिंसादिजन्तवः, वर्णाः शब्दराशिशरीरस्थाः नित्यं वशे तिष्ठन्ति ।

५९ अवहितस्य योगिनः शरीरान्तरसंक्रान्ति समुत्क्रान्त्यादिषु अपि स्वातन्त्र्याविर्भावात् इत्यर्थः ।

६० योगप्रकर्षात् तु नित्यम् आदिमध्यान्तकोटिषु अयं श्रीस्वच्छ-न्दभैरव एव स्फुरन् स्थित इति यावत् ।

६१ अयमाशयः, प्राकृतं जडमपि एतत् बाह्याभ्यन्तरमिन्द्रियचक्रं प्रवृत्त्यादिचेतनव्यापारसमर्थं यत्संस्पर्शबलात् भवति, तत् तत्त्वमात्मत्वेन

न चैवमपि उदासीनेन अनेन भाव्यम् अपि तु—

बीजावधानम् ॥ १५ ॥

कर्तव्यमिति शेषः। बीजं विश्वकारणं स्फुरत्तात्मा परा शक्तिः। यदुक्तं श्रीमृत्युजिद्भट्टारके

'सा योनिः सर्वदेवानां शक्तीनां चाप्यनेकधा।
अग्नीषोमात्मिका योनिस्ततः[६२] सर्वं प्रवर्तते ॥'

इत्यादि। तत्र परशक्त्यात्मनि बीजे, अवधानं भूयो भूयश्चित्तनिवेशनं कार्यम् ॥ १५ ॥

एवं हि सति असौ योगी—

आसनस्थः सुखं ह्रदे निमज्जति ॥ १६ ॥

आस्यते, नित्यमैकात्म्येन स्थीयते अस्मिन् इति आसनं, परं शाक्तं बलम्; यस्तत्र तिष्ठति, परिहृतपरापरध्यानधारणादिसर्व[६३]क्रियाप्रयासो

---

स्फुटीकृतं सत्, इन्द्रियचैतन्यापादनस्वातन्त्र्यवत् सर्वविषयस्वातन्त्र्यलाभाय कल्पते एव, अतः परीक्ष्यं, येन अभ्यासदशायामेव अभिव्यज्यमाने स्वातन्त्र्ये परशरीरावेशादिक्रीडा उपपद्यते।

६२ संहारसृष्टि-प्रमाणप्रमेय-प्राणापान-सूर्यसोमादिशब्दाभिधेया।

६३ शाक्त-आणवोपाययोः उक्तान् स्फुटतमविकल्पसंस्क्रिया-स्थान-करण-वर्णोच्चारादीन् सर्वान् परिहृत्य 'शिवोऽहमस्मि' इत्यहन्तया परामृशन्।

**नित्यमन्तर्मुखतया तदेव परामृशति यः, स सुखमनायासतया, ह्रदे, विश्वप्रवाहप्रसरहेतौ स्वच्छोच्छलत्तादियोगिनि[६४] परामृतसमुद्रे निमज्जति, देहादिसंकोचसंस्कारब्रोडनेन तन्मयीभवति । यदुक्तं श्रीमृत्युजिद्भट्टारके एव**

'नोर्ध्वे[६५] ध्यानं प्रयुञ्जीत नाधस्तान्न च मध्यतः ।
नाग्रतः पृष्ठतः किञ्चिन्न पार्श्वे नोभयोरपि ॥
नान्तः शरीरसंस्थं[६६] तु न बाह्ये भावयेत्क्वचित् ।
नाकाशे बन्धयेल्लक्ष्यं नाधो दृष्टिं निवेशयेत् ॥

---

६४ विश्वप्रतिबिम्बोपग्रहणे शक्तत्वं स्वच्छता, देशकालाकारवस्तूपादानसामग्रीनिरपेक्षं तत्तद्वस्तुरूपेण अवभासनकारित्वमुच्छलत्ता ।

६५ ऊर्ध्वे द्वादशान्ते, अधः कन्दादौ, मध्यतो मध्ये हृदयादौ, अग्रतः पृष्ठतः पार्श्वयोः, तत्पुरुष-सद्योजातादिरूपम् ।

६६ नान्तः शरीरेति

'आ मूलात्किरणाभासां सूक्ष्मात्सूक्ष्मतरात्मिकाम् ।
चिन्तयेत्तां द्विषट्कान्ते शाम्यन्तीं भैरवोदयः ॥'

इति-वत् । न बाह्य इति

'वस्त्वन्तरे वेद्यमाने सर्ववेद्येषु शून्यता ।
तामेव मनसा ध्यायन्विदितेऽपि प्रशाम्यति ॥'

इति-वत् । नाकाश इति

'तेजसा सूर्यदीपादेराकाशे शबलीकृते ।
दृष्टिं निवेश्य तत्रैव स्वात्मरूपं प्रकाशते ॥'

इति-वत् । नाध इति

**न चक्षुर्मीलनं किञ्चिन्न किंचिद्दृष्टिबन्धनम् ।**
**अवलम्बं निरालम्बं सालम्बं नैव भावयेत् ॥**
**नेन्द्रियाणि न भूतानि शब्दस्पर्शरसादयः ।**
**एवं त्यक्त्वा समाधिस्थः केवलं तन्मयीभवेत् ॥**

---

'कूपादिके महागर्ते स्थित्वोपरि निरीक्षणात् ।
अविकल्पमतेः सम्यक्सद्यश्चित्तलयः स्फुटम् ॥'

इति-वत् ।

६७ न चक्षुर्मीलनमिति

'एवमेव निमील्यादौ नेत्रे कृष्णाभमग्रतः ।
'प्रसार्य भैरवं रूपं भावयंस्तन्मयो भवेत् ॥'

इति-वत् । दृष्टिबन्धनम् इति

'निर्वृक्षगिरिभित्त्यादौ देशे दृष्टिं विनिक्षिपेत् ।
निलीने मानसे भावे वृत्तिक्षीणः प्रजायते ॥'

इति-वत् । अवलम्ब्यते इत्यवलम्बो, ध्येय आकारः तमिति

'भावे त्यक्ते निरुद्धा चिन्नैव भावान्तरं व्रजेत् ।
तदा तन्मध्यभावेन विकसत्यतिभावना ॥'

इति-वत् । निरालम्बमिति

'उभयोर्भावयोर्ज्ञाने ज्ञात्वा मध्यं समाश्रयेत् ।
युगपच्च द्वयं त्यक्त्वा मध्ये तत्त्वं प्रकाशते ॥'

इति-वत् । सह आलम्बेन वर्तते इति सालम्बं साकारज्ञानम्

'इच्छायामथ वा ज्ञाने जाते चित्तं निवेशयेत् ।
तत्र बुद्ध्यानन्यचेतास्ततः स्यादात्मदर्शनम् ॥'

इति-वत् ।

६८ नेन्द्रियाणीति, तत्तद्धारणापटलोक्तनीत्या सर्वं त्यक्त्वा समाधिस्थ-अकिंचिच्चिन्तकत्वेन स्वस्वरूपविमर्शप्रवणः, तन्मयः आनन्दपदसंलीनः समरसज्ञानमयः ।

> सार्वस्थ्या[69] परमा प्रोक्ता शिवस्य परमात्मनः ।
> निराभासं पदं तत्तु तत्प्राप्य विनिवर्तते ॥'

इति ॥ १६ ॥

तदेवं नाडीसंहाराद्याणवोपायक्रमासादितमोहजयोन्मज्जच्छुद्धविद्यात्मकशाक्तबलासादनप्रकर्षाद् आत्मीकृतपरामृतह्रदात्मकशाम्भवपदो योगी—

**स्वमात्रानिर्माणमापादयति ॥ १७ ॥**

स्वस्य चैतन्यस्य संबन्धिनी मात्रा चिद्रसाश्यानतात्मा अंशः, तद्रूपं यथेष्टवेद्यवेदकावभासात्मकं निर्माणमापादयति, निर्मितत्वेन दर्शयति। यदुक्तं श्रीस्वच्छन्दे

> 'तदेवं[70] भवति स्थूलं स्थूलोपाधिवशात्प्रिये ।
> स्थूलसूक्ष्मविभेदेन तदेकं संव्यवस्थितम् ॥'

इति । प्रत्यभिज्ञायामपि

---

६९ या च एवं-भूता दशा, सा शैवी मुक्तावस्था, वेद्योल्लासानामात्यन्तिकानवभासनपदम्; विनिवर्तते इति सांसारिकीं स्थितिमुज्झति इत्यर्थः।

७० महाप्रकाशात्मनः श्रीस्वतन्त्रनाथस्य स्वच्छन्दभैरवस्यैव स्वस्वातन्त्र्येण स्थूलाभासतया स्फुरणात्, स एव विचित्रवेद्यस्फूर्त्या उपाधीयते; व्यापकः प्रकाशो हि व्याप्यात्मना स्फुरति, न तु व्याप्यं नाम तस्माद्भिन्नम्, अतः स उपाधिः चित्तत्त्वात् नातिरिच्यते इति भावः ।

'आत्मानमेतं[71] एवायं ज्ञेयीकुर्यात्पृथक्स्थिति ।
ज्ञेयं न तु ................................................ ॥'

इति । आगमेऽपि

'जलं[72] हिमं च यो वेद गुरुवक्त्रागमात्प्रिये ।
नास्त्येव तस्य कर्तव्यं तस्यापश्चिमजन्मता ॥'

इति अनेनैव आशयेन उक्तम् । एतदेव

'इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥'

इति-अनेन स्पन्दे प्रतिपादितम् ॥ १७ ॥

न चैवं स्वशक्तिनिर्मितभूत[73]भावशरीरवतोऽस्य जन्मादिबन्धः कश्चिदित्याह—

---

७१ एतादृशशुद्धस्वातन्त्र्यवशात् नैष तदा पृथगेव लब्धप्रतिष्ठं वस्तु अवैति, अपि तु अज्ञेयमात्मानम् अनियन्त्रितप्रभावतया ज्ञेयीकरोति, भिन्नज्ञेयसापेक्षत्वे ज्ञानकर्तृता म्लायेत् ज्ञातृत्वं हीयेत इति तात्पर्यम् ।

७२ यथा जलहिमयोः रस-तदाश्यानताभावः, एवं शिव तच्छक्त्यात्म-जगतोः चिद्रस-तदाश्यानतासंवेदनात् परशाक्तस्फारपूतहृदयानां पश्चिमं जन्मान्तरं नास्ति, वर्तमाने जीवन्मुक्ततया स्थितस्यापि देहस्य आरब्ध-कर्मभोगक्षये निवर्तिष्यमाणत्वात् ।

७३ द्विविधं शरीरं भूतात्मकं भावात्मकं च । तत्र मायाशक्तिवैभव-विस्मारिततात्त्विकस्वभावतया वस्तुसंवेदनावसरे स्वरूपपरामर्शमुकुलितसा-मर्थ्योऽयं जीवः अवच्छिन्नाहंकारास्पदतया शिरःपाण्यादिमच्छरीरत्वेन यत् परामृशति तत् अस्य सृष्ट्यादिमयत्वात् भूतात्मकम् । यत्तु व्यतिरिक्तं शब्दादिविषयत्वेम परामृशति तत् भावात्मकम् । परमार्थे तु विचार्यमाणे द्वयमेव भिन्नं स्वस्मात् अस्य शरीरं, संवेद्यमानत्वाविशेषात् ।

## विद्याऽविनाशे जन्मविनाशः ॥१८॥

प्रोक्तायाः सहजविद्याया अविनाशे सततोन्मग्नतया स्फुरणे, जन्मनः अज्ञान[७४]सहकारिकर्महेतुकस्य दुःखमयस्य देहेन्द्रियादिसमुदायस्य, नाशो विध्वंसः संपन्न एव । यदुक्तं श्रीकण्ठ्याम्

'सप्रपञ्चं परित्यज्य हेयोपादेयलक्षणम् ।
तृणादिकं तथा पर्णं पाषाणं सचराचरम् ॥
शिवाद्यवनिपर्यन्तं भावाभावोपबृंहितम् ।
सर्वं शिवमयं[७५] ध्यात्वा भूयो जन्म न प्राप्नुयात् ॥'

इति । श्रीस्वच्छन्दे

'स्वनिर्वाणं[७६] परं शुद्धं गुरुपारम्परागतम् ।
तद्विदित्वा विमुच्येत गत्वा भूयो न जायते ॥'

इति । श्रीमृत्युजित्यपि

---

७४ अज्ञानपदेन अपूर्णम्मन्यता-भेदप्रथात्मकम् आणव-मायीयाख्यमलद्वयं ग्राह्यं, तत् कर्मणः सहकारि, उपोद्बलकम् इत्यर्थः ।

७५ प्रमेयविकासौन्मुख्यपरिवर्जनमेव विश्वमयानुत्तरशिवमयीकरणम्, प्राक् सृष्टेः विश्वस्य चिद्रसस्वभावैकात्म्येन अवस्थानात् इत्यर्थः ।

७६ स्वनिर्वाणं मोक्षमार्गः पराद्वयमयत्वात्, अत एव परं शुद्धं शुद्धाशुद्धसदाशिवादिपदात् अपि प्रकृष्टम्, गुरूणां परम्परैव पारम्परं परभैरव-तच्छक्ति-सदाशिव-ईशान-अनन्त-श्रीकण्ठादिरूपम्, तत आगतम्, विदित्वा अनुभूय, विमुच्येत जीवन्नेव विमुक्तः स्यात्; देहान्ते गत्वा तदैकात्म्यमेति ।

'तत्त्वत्रयविनिर्मुक्तं शाश्वतं त्वचलं ध्रुवम् ।
दिव्येन योगमार्गेण दृष्ट्वा भूयो न जायते ॥'

इति ॥ १८ ॥

यदा तु शुद्धविद्यास्वरूपम् अस्य निमज्जति तदा—

## कवर्गादिषु माहेश्वर्याद्याः पशुमातरः ॥ १९ ॥

अधिष्ठात्र्यो भवन्ति इति शेषः ।

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते ।
सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु ॥
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ॥

---

७७ तत्त्वत्रयं नर-शक्ति-शिवाख्यम्, शाश्वतमविवर्तं विवर्तवाद इव न असत्यविभक्तान्यरूपोपग्राहि, अचलमपरिणामि, ध्रुवं नित्यम्, दिव्येन योगमार्गेण विकल्पहानोन्मिषदविकल्पविमर्शावष्टम्भोपायेन साक्षात्कृत्य पुनर्जन्म नैति ।

७८ परतत्त्वधामाधिरूढावपि प्रमाद्यतः पशून् परापरमयशब्दप्रत्ययोत्पादनेन अविश्रान्तं परस्वरूपावृतौ आधिपत्यभाजो मातृका मोहयन्ति इति तात्पर्यम् ।

७९ शक्तिर्विमर्शात्मिका, समवायिनी परप्रमात्रवियुक्तत्वात् तदात्मभूता, तस्याः आद्योच्छलत्तात्मकत्वेन बहिरुल्लिलसिषास्वभाववशात् इच्छात्वप्राप्तिः ।

८० इदमेतत्-इत्येवमाकारवतां भावानाम् अनुज्झितसंविदभेदानां कल्पितमायीयशून्यादिप्रमात्रपेक्षया भेदेन ज्ञापनात् ज्ञानशक्तिरुच्यते ।

एवं-भूतमिदं वस्तु भवत्विति यदा पुनः ।
जाता तदैव तत्तद्वत्कुर्वत्यत्र क्रियोच्यते ॥
एवं सैषा द्विरूपापि पुनर्भेदैरनन्तताम् ।
अर्थोपाधिवशात्प्राप्ता चिन्तामणिरिवेश्वरी ॥
तत्र तावत्समापन्नमातृभावा[82] विभिद्यते ।
द्विधा च नवधा[83] चैव पञ्चाशद्धा च मालिनी ॥
बीजयोन्यात्मकाद्भेदाद् द्विधा बीजं स्वरा मताः ।
कादिभिश्च स्मृता योनिर्नवधा वर्गभेदतः ॥
बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते ।
वर्गाष्टकविभेदेन माहेश्वर्यादि चाष्टकम् ॥
प्रतिवर्णविभेदेन शतार्ध[84]किरणोज्ज्वला ।
रुद्राणां वाचकत्वेन तत्संख्यानां निवेशिता ॥'

इति-श्रीमालिनीविजयनिरूपितनीत्या पारमेश्वरी परावाक् प्रसरन्ती, इच्छा-ज्ञान-क्रियारूपतां श्रित्वा, बीजयोनि-वर्ग-वर्ग्यादिरूपा शिव-शक्ति-माहेश्वर्यादिवाचक-आदि-क्षान्तरूपां मातृकात्मतां श्रित्वा, सर्वप्रमातृषु अविकल्प-

---

८१ निगूहितस्वस्वरूपावष्टम्भमूलं तत्तद्वैचित्र्यभूमिकाप्रपञ्चं वितन्वतः परमेश्वरस्य असौ पारमेश्वरी स्वातन्त्र्यशक्तिः तत्तत्प्रमातृ-प्रमेयाद्यनन्ताभासवैचित्र्यकारितया समुच्छलन्ती क्रियाशक्तिरित्युच्यते ।

८२ वाच्य-वाचकात्मजगज्जननात् माता ।

८३ कूटबीजस्यापि वर्गान्तरात्मतया अभ्युपगमात् नवधात्वम् ।

८४ शतार्धेति पञ्चाशच्छक्तिभास्वरा, रुद्राणां पञ्चाशतो वाच्यात्मनाम् वाचकत्वेन परिनिष्ठिता ।

क-सविकल्पक-तत्तत्संवेदनदशासु, अन्तः परामर्शात्मना स्थूलसूक्ष्मशब्दानुवेधनं विदधाना, वर्ग-वर्ग्यादिदेवताधिष्ठानादिद्वारेण स्मय-हर्ष-भय-राग-द्वेषादिप्रपञ्चं प्रपञ्चयन्ती, असंकुचितस्वतन्त्रचिद्घनस्वस्वरूपमावृण्वाना संकुचितपरतन्त्रदेहादिमयत्वमापादयति । तदुक्तं श्रीतिमिरोद्घाटेपि

'करन्ध्रे[८५]चितिमध्यस्था ब्रह्मपाशावलम्बिकाः ।
पीठेश्वर्यो महाघोरा मोहयन्त्यो मुहुर्मुहुः ॥'

इति पूर्वमपि संवादितम् । 'ज्ञानाधिष्ठानं मातृका' (१-४-) इति सामान्येन उक्तम्, इदं तु प्राप्ततत्त्वोऽपि प्रमाद्यन् माहेश्वर्यादिभिः पशुजनाधिष्ठातृभूताभिरपि शब्दानुवेधद्वारेण मोह्यते इत्याशयेन; इति विशेषः ॥ १९ ॥

---

८५ ब्रह्माख्यसुषिरस्थे चिद्गगने, संविदन्तःस्था माहेश्वर्याद्या भेदमयज्ञानावभासनप्रावण्यात् घोरतर्यभिधाः पशुमातरो दुरुच्छेदब्रह्मग्रन्थ्याश्रयाः पशुजनम् अधः पातयन्तीत्यर्थः । यदुक्तम्

'विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।
रुद्राणून्याः समालिङ्ग्य घोरतर्योऽपराः स्मृताः ॥'

इति ।

'घोरेति पाशजालाख्यं पापयुक्तं भयानकम् ।'

इति च ।

यत एवम्, अतः शुद्धविद्यास्वरूपमुक्तयुक्तिभिरासादितमपि यथा न नश्यति, तथा सर्वदशासु योगिना सावधानेन भवितव्यम् इत्याह—

त्रिषु चतुर्थं तैलवदासेच्यम् ॥२०॥

त्रिषु जागरादिषु पदेषु, चतुर्थं शुद्धविद्याप्रकाशरूपं तुर्यानन्दरसात्मकं धाम, तैलवदिति, यथा तैलं क्रमेण अधिकमधिकं प्रसरद् आश्रयं व्याप्नोति तथा आसेच्यम्। त्रिष्वपि पदेषु उन्मेषोपशान्त्यात्मकाद्यन्तकोट्योः परिस्फुरता तुर्यरसेन मध्यदशामपि अवष्टम्भयुक्त्या व्याप्नुयात्, येन तन्मयीभावमाप्नुयात्[८६]। 'जाग्रत्स्वप्नसुषुप्तेषु तुर्याभोगसंभवः' (१–७) इत्यनेन उद्यम-शक्तिचक्रानुसंध्यवष्टम्भभाजः स्वरसप्रसरज्जागरादिपदेषु सत्तामात्रं तुर्यस्योक्तम्। 'त्रितयभोक्ता वीरेशः' (१–११) इति

---

८६ विश्वसृष्ट्याविर्भवनात्मकस्य उन्मेषस्य जागरादिदशानाम् आद्यन्तकोटिषु प्रशमात् परिशिष्टस्य व्यापिनः तुर्यप्रकाशस्यैव रसः आस्वाद्यते, अतः सृष्टिरूपोन्मेषोऽपि तदवधानदृढाभ्यासात् तुर्यरसमयीकार्यः इत्यर्थः।

शाम्भवोपायानुगुणहठपाक[87]युक्त्या जागरादि-संहारो दर्शितः । अनेन तु सूत्रेण आणवोचितावष्टम्भयुक्त्या दल[88]कल्पं जागरादित्रयं तुर्यरसासिक्तं कार्यम् इत्युक्तम्; इति विशेषः ॥

[89]अत्रोपायमाह—

**मग्नः स्वचित्तेन प्रविशेत् ॥२१॥**

'प्राणादिस्थूल[90]भावं तु त्यक्त्वा सूक्ष्ममथान्तरम् ।
सूक्ष्मातीतं तु परमं स्पन्दनं लभ्यते यतः ॥'

इत्युपक्रम्य

..........................प्रविशेत्तत्स्वचेतसा ॥'

इति-श्रीमृत्युजिद्भट्टारकनिरूपितनीत्या प्राणायाम-ध्यान-धारणादिस्थूलोपायान् परित्यज्य,

---

८७ हठपाकक्रमः, हठेन क्रमातिक्रमरूपेण सकृदुपदेशाद्यात्मना बलात्कारेण, यः पाकः चिदग्निसात्कारः, तस्य क्रमेण सृष्ट्याद्युपाधीनां विगलनम्; इयं युक्तिः तीव्रतरशक्तिपाताधिकारेण शांभवोपायविशेषानुगुणा इत्यर्थः ।

८८ दलः खड्गकोशः, स यथा खड्गाद्विभिन्नः तद्वत् पृथगवभासमानमित्यर्थः ।

८९ अत्रेति जागरादिदशासु तैलवत् आसेचने ।

९० स्थूलो रेचकपूरकादिस्वभावः, तदनन्तरभावि सूक्ष्मम् आन्तरं मध्यपथेन रेचनाचमनादिरूपम्, तदतीतम् प्राणव्यतिरिक्तपूर्वतनचित्स्फुरत्तात्म स्पन्दनम् ।

स्वचित्तेन[९१], अविकल्पकरूपेण अन्तर्मुखान्तरविमर्शचमत्कारात्मना संवेदनेन, प्रविशेत् समाविशेत् । कीदृक् सन्? मग्नः, शरीरप्राणादिप्रमातृतां तत्रैव चिच्चमत्काररसे मज्जनेन प्रशमयन् । तदुक्तं श्रीस्वच्छन्दे

'व्यापारं मानसं त्यक्त्वा बोधरूपेण योजयेत् ।
तदा शिवत्वमभ्येति पशुर्मुक्तो भवार्णवात् ॥'

इति । श्रीविज्ञानभट्टारकेऽपि

'मानसं चेतना शक्तिरात्मा चेति चतुष्टयम् ।
यदा प्रिये परिक्षीणं तदा तद्भैरवं वपुः[९२] ॥'

इति । एतदेव ज्ञानगर्भे स्तोत्रे

'विहाय सकलाः क्रिया जननि मानसीः सर्वतो
विमुक्तकरणक्रियानुसृतिपारतन्त्र्योज्ज्वलम् ।

---

९१ चेत्यसंकोचौन्मुख्यहानपूर्वमसंकुचितचितिरूपेण इत्यर्थः ।
'तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ।'

इति-स्पन्ददृशा आदौ शिष्यात्मानं स्वात्मनि समरसीकृत्य, समनान्तमतिक्रम्य, शुद्धात्मनि स्थितिं बद्ध्वा, बोधरूपेण अविकल्पसंवित्स्पर्शेनैव उन्मनाशक्त्यनुप्रवेशप्रमुखं शिवे योजयेत् ।

९२ मानसं संकल्पात्मकम्, चेतना बुद्धिः, शक्तिः प्राणाख्या, आत्मा एतदुपहितः परिमितप्रमाता; एतच्चतुष्टयं यदा परिक्षीणं, चिच्चमत्कारतामापन्नं, तदा तत् पूर्वोक्तं भैरवं वपुर्भवति ।

स्थितैस्त्वदनुभावतः सपदि वेद्यते सा परा
दशा नृभिरतन्द्रितासमसुखामृतस्यन्दिनी[९३] ॥'

इत्यनेन महागुरुभिर्निबद्धम् ॥ २१ ॥

इत्थं च परमपदप्रविष्टस्य अस्य वस्तुस्वा[९४]-भाव्यात् यदा पुनः प्रसरणं भवति तदा—

## प्राणसमाचारे समदर्शनम् ॥२२॥

परस्फुरत्तात्मकशाक्तपरिमलसंस्कृतस्य प्राणस्य, सम्यक् इति विकसितसमग्रग्रन्थ्यात्मकान्तरावष्टम्भबलात्[९५], आ ईषत् बहिर्मन्दमन्दं चारे प्रसरणे, समं चिदानन्दघनात्मतया एकरूपं, दर्शनं संवेदनम्[९६], अर्थात् सर्वदशासु अस्य भवति इत्यर्थः। उक्तं च श्रीमदानन्दभैरवे

---

९३ मानसीः विकल्पस्मृत्यादिरूपाः, करणं दिव्यकरणाख्यमूर्ध्वरेचकादिमुद्राबन्धनम्, इत्थं शांभवोपायसमाविष्टैर्योगिभिः अनुत्तरानन्ददशा अनुभूयते।

९४ विसर्गधाम्नः चिदर्कबिम्बस्य बहिः विचित्रविश्वपदार्थोल्लिलसिषात्ममरीचिनिचयप्रसारणौन्मुख्यं स्वभावः, प्रत्यवमर्शृस्वरूपत्वात्।

९५ यत्र विश्वे पाशात्मग्रन्थयः स्वात्मसात्क्रियन्ते, तादृशस्य आन्तरस्वरूपस्य आलम्बनबलात्।

९६ येयं जीवनस्वभावा चिद्रूपस्य स्थितिः, सैव सामान्यस्पन्दरूपा अचेतनप्राणादेः चेतनायमानतासंपादयित्री, अहमिति-विकल्पपरामर्शमयी प्राणादिविशिष्टरूपेण पाञ्चविध्यं भजते; तस्मात् प्राणादिप्रसरणमुपजीव्य

'उत्सृज्य लौकिकाचारमद्वैतं मुक्तिदं श्रयेत् ।
स समं सर्वदेवानां[97] तथा वर्णाश्रमादिके ॥
द्रव्याणां समतादर्शी स मुक्तः सर्वबन्धनैः ।'

इति । अत एव श्रीप्रत्यभिज्ञायाम्

'बुद्धिप्राणप्रसरेऽपि बाह्यदेशाद्युपादानानाहितसंको[98]-
चानां विश्वात्मस्वरूपलाभ एव ॥'

इत्युक्तम् ॥ २२ ॥

यदा तु अन्तर्मुखतुर्यावधानावष्टम्भप्रकर्ष-लभ्यं तुर्यातीतपदम् एवमयं न समाविशति, अपि तु पूर्वापरकोटिसंवेद्यतुर्यचमत्कारमात्रे एव संतुष्यन्नास्ते, तदा अस्य—

**मध्येऽवरप्रसवः ॥ २३ ॥**

पूर्वापरकोट्योस्तुर्यरसमास्वादयतो, मध्ये मध्यदशायाम्[99], अवरः अश्रेष्ठः, प्रसवो व्युत्था-

---

वर्तमाना जागरादितुर्यातीता दशा, अन्यथा तुर्यतदतीतयोः व्युत्थानानुपपत्तेः; प्राणवृत्तिसद्भावादेव व्युत्थीयते योगिभिः; अतो हेयासु प्राथमिकीषु तिसृषु अवस्थासु चिदात्मतया संवेद्यते वेद्यम् इति तात्पर्यम् ।

९७ देवानाम् अनाश्रित-सदाशिव-ईश्वर-अनन्तरुद्रादीनाम् । वर्णाश्रमादि विप्रब्रह्मचार्यादि, आदिना श्वपचादि, द्रव्याणां क्षीरमद्यादीनां चिदात्मैक्यतापरामर्शी इत्यर्थः ।

९८ अनाहितसंकोचानामिति अकृतचित्स्वरूपावृतीनाम् ।

९९ अवरप्रसवो भेदप्रथनात्मा मध्यदशायामेव भवति न सर्वत्र ।

नात्मा कुत्सितः सर्गो जायते। न तु 'विद्यासंहारे तदुत्थस्वप्नदर्शनम्' (२–१०) इत्युक्तसूत्रार्थनीत्या सदा व्यामुह्यति इत्यर्थः। उक्तं श्रीमालिनीविजये

'वासनामात्रलाभेऽपि योऽप्रमत्तो न जायते।
तमनित्येषु भोगेषु योजयन्ति विनायकाः॥
तस्मान्न तेषु संसक्तिं कुर्वीतोत्तमवाञ्छया।'

इति प्रागपि (७१पृ०) संवादितम्॥ २३॥

एवमेव प्रसवेऽपि प्रवृत्ते यदि तुर्यरसावष्टम्भेन मध्यपदं सिञ्चति पुनरपि, तदा—

## मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम्॥ २४॥

मात्रासु[101] पदार्थेषु स्वप्रत्ययसंधानम्।

'चक्षुषा यच्च संधानं[102] वाचा वा यश्च गोचरः।
मनश्चिन्तयते यानि बुद्धिश्चैवाध्यवस्यति॥

---

१०० चिदानन्दघनस्वस्वरूपामृतरसास्वादने समाधानसंस्कारस्य प्राप्तौ प्रमाद्यतो माहेश्वर्यादिभिः, विघ्नद्भिः सिद्धैश्च अनित्यदिव्यभोगेषु विलोभनात्; तुर्यातीतपदसमावेशाय तेषु रतिः न विधेया इत्यर्थः।

१०१ मीयन्ते इति मात्राः, रूपादयो विषयाः; पञ्चस्वेव विषयेषु विश्वपदार्थानां परिसमाप्तेः।

१०२ संधानं रूपज्ञानम्, वाचा पश्यन्त्यादिरूपिण्या, यानि सुखादीनि।

अहङ्कृतानि यान्येव यच्च वेद्यतया स्थितम्[१०३]।
यश्च नास्ति स तत्रैव त्वन्वेष्टव्यः प्रयत्नतः ॥'

इति-श्रीस्वच्छन्दनिरूपितनीत्या 'विश्वमिदम् अहम्, इति चिद्धनात्मरूपतां सर्वत्र अनुसंदधतः[१०४], पूर्वोक्तावरप्रसवात् नष्टस्य, अपहारिततुर्यैकघनचमत्कारमयस्वभावस्य, पुनरुत्थानम् उन्मज्जनं तदैक्यसंपत्संपूर्णत्वं योगिनो भवति इत्यर्थः। तदुक्तं श्रीस्वच्छन्दे

'प्रसह्य चञ्चलीत्येव[१०५] योगिनामपि यन्मनः।'

इत्युपक्रम्य

'यस्य[१०६] ज्ञेयमयो भावः स्थिरः पूर्णः समन्ततः।
मनो न चलितं तस्य सर्वावस्थागतस्य तु ॥

---

१०३ कल्पितप्रमात्रपेक्षया भिन्नावभासप्राणितम् इदन्तास्पदम् अवलम्बयता ग्राह्यभावेन स्थितम्, स इति चित्प्रकाशः परमशिवो भावाभावमये विश्वस्मिन् जगति चित्प्रकाशैकात्म्येन प्रकाशमाने अन्वेष्टव्यः प्रत्यभिज्ञेयः। यथा अयं स चिदात्मा प्रकाशो महेश्वरः, यत्प्रकाशाभेदेन विश्वमिदं प्रकाशते, प्रकाशबाह्यस्य कस्यापि प्रकाशनानुपपत्तेः यस्तु अयं विश्वप्रकाशात्मा स्वप्रकाशः प्रकाशः प्रकाशते स एवाहमिति तात्पर्यम्।

१०४ पौनःपुन्येन आवेशसद्भावात् अवहितत्वेन विमृशतः।

१०५ कुटिलं चलति भोगाभिलाषेण व्युत्थानमेव धावति, न अभीष्टं पदमवष्टभ्नाति यस्मात्।

१०६ तत इति अध्याहार्यम् पूर्वपद्यसापेक्षत्वात्, ज्ञेयं परतत्त्वं, भाव आशयः चिन्त्यतुर्यातीतपदमयः, स्थिरो निश्चलः, पूर्णो निराकाङ्क्षः, समन्ततः सर्वसर्विकया, तुः अप्यर्थे।

यत्र यत्र मनो[107] याति ज्ञेयं तत्रैव चिन्तयेत् ।
चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः ॥'

इति ।

'विषयेषु च सर्वेषु इन्द्रियार्थेषु[108] च स्थितम् ।
यत्र यत्र निरूप्येत नाशिवं विद्यते क्वचित् ॥'

इति च ॥ २४ ॥

इत्थमासादितप्रकर्षो योगी—

## शिवतुल्यो जायते ॥ २५ ॥

तुर्यपरिशीलनप्रकर्षात्[109] प्राप्ततुर्यातीतपदः परिपूर्णस्वच्छस्वच्छन्दचिदानन्दघनेन शिवेन भगवता तुल्यो, देहकलाया अविगलनात् तत्समो जायते[110] । तद्विगलनेन साक्षाच्छिव एव असौ इत्यर्थः । तथा च श्रीकालिकाक्रमे

---

१०७ ईदृशस्य महायोगिनो मन एव परतत्त्वैक्यभावनावासितं कर्तृ तुर्यातीतपदं ज्ञेयं सर्वत्र चिन्तयत्येव । तदुक्तं महागुरुभिः

'शिवभावनयौषध्या बद्धे मनसि संसृतेः ।
काष्ठकुड्यादिषु क्षिप्ते रसवच्छिवहेमता ॥'

इति ।

१०८ इन्द्रियाणि च अर्थश्च ऐन्द्रियिकं प्रयोजनं च विषयोपभोगः, तेषु स्थितो योगिवरो यो निरूप्येत विचार्येत यत्र कुत्रापि नास्य अशिवमस्ति, सर्वस्य अस्य प्रकाशमानतया प्रकाशघनशिवैकात्म्यात् ।

१०९ पुनः पुनः तुर्यपदपरामर्शनदार्ढ्यात् मध्यधाम्नि प्रोच्छलदहन्ताचमत्कृतिप्ररूढेः ।

११० मुखेन्दुरिति-वत् ईषत् न्यूनतया साम्यम् ।

'तस्मान्नित्यमसंदिग्धं बुद्ध्वा योगं गुरोर्मुखात् ।
अविकल्पेन[111] भावेन भावयेत्तन्मयत्वतः ॥
यावत्तत्समतां याति भगवान्भैरवोऽब्रवीत् ।'

इति ॥ २५ ॥

एवमपि च 'येनेदं तद्धि भोगतः' इत्याद्युक्तरीत्या उपनतभोगातिवाहनमात्रप्रयोजनात् देहस्थितिः अस्य न अतिक्रमणीया इत्याह[112]—

## शरीरवृत्तिर्व्रतम् ॥ २६ ॥

प्रोक्तदृशा शिवतुल्यस्य योगिनः शिवाहंभावेन वर्तमानस्य, शरीरे वृत्तिर्वर्तनं यत्, तदेव व्रतम्; स्वस्वरूपविमर्शात्मकनित्योदितपरपूजातत्परस्य नियमेन अनुष्ठेयम् अस्य। तथा च श्रीस्वच्छन्दे

---

१११ विकल्पहान्या उन्मिषदविकल्पविमर्शावष्टम्भेन शिवमयभावेन तुर्यातीताख्यं पदं भावयेत्, शिवमयभावनाया भैरवस्वरूपसाम्यप्राप्त्यवधित्वात् ।

११२ आगामिसंचितयोः कर्मणोः ज्ञानाग्निना भस्मसाद्भावेऽपि प्रारब्धस्य भोगमन्तरेण नाशयितुमशक्यत्वात् जीवन्मुक्तस्य आ प्रारब्धभोगपरिसमाप्तेः देहस्थितिः, चक्रभ्रमिरिव आ वेगावसानात् न अतिवर्तनीया; देहपाते विदेहमुक्तेः अपुनरावर्तनात् ।

'सुप्रदीप्ते[113] यथा वह्नौ शिखा दृश्येत चाम्बरे ।
देहप्राणस्थितोऽप्यात्मा तद्वल्लीयेत तत्पदे ॥'

इत्युक्त्या देहप्राणाद्यवस्थितस्यैव शिवसमाविष्टत्वमुक्तम् । न पुनस्तस्य देहस्थितिव्यतिरिक्तं व्रतमुपयुक्तम् । यदुक्तं श्रीत्रिकसारे

'देहोत्थिताभिर्मुद्राभिर्यः सदा मुद्रितो बुधः ।
स तु मुद्राधरः[114] प्रोक्तः शेषा वै अस्थिधारकाः ॥'

इति । श्रीकुलपञ्चाशिकायामपि

'अव्यक्तलिङ्गिनं दृष्ट्वा संभाषन्ते मरीचयः[115] ।
लिङ्गिनं नोपसर्पन्ति अतिगुप्ततरा यतः ॥'

इति ॥ २६ ॥

---

११३ देह-मन्त्र-प्राण-आत्म-शिवपदानाम् औचित्यात् काष्ठ-अरणि-वह्नि-तच्छिखा-अम्बराणि दृष्टान्तः, तेन अरणिमन्थनयुक्त्या सुप्रदीप्ते प्रज्वालिते वह्नौ सति यथा शिखा ज्वाला दाह्यं दग्ध्वा अम्बरे दृश्यते, तत्र लयात् तदात्मभावं प्राप्ता अवलोक्यते; तद्वद्दिव्यकरणमन्त्रारणिसमुत्तेजनेन देहे यः प्राणः तस्मिन् सुप्रदीप्ते मध्योर्ध्ववाह्युदानाग्नितामायाति, देहे स्थितो य आत्मा प्रोक्तशुद्धविज्ञानकेवलरूपो वह्निशिखातुल्यः समनान्तं समस्तं देहदारु दग्ध्वा तस्मिन् तुर्यातीते पदे लीयते, निरुपाधि-परमशिवैकात्म्यमेत्येव इत्यर्थः ।

११४ 'अन्तर्लक्ष्यबहिर्दृष्टिः' इत्याद्युक्तनीत्या शांभवीयमुद्रामुद्रणात् मुद्राधरः, न तु काय-करसंनिवेशविशेषधारणात् ।

११५ निगूढभैरवीयमुद्राचिह्नितस्य सर्वाः शक्तयः उपसृता आविर्भवन्ति । व्यक्तस्थूलमुद्राधृतोऽनुपसरणात् ।

एवं-विधस्य अस्य—

कथा जपः ॥ २७ ॥

'अहमेव परो हंसः शिवः परमकारणम् ।'

इति-श्रीस्वच्छन्दनिरूपितनीत्या नित्यमेव पराहंभावनामयत्वात् ।

'तस्य देवातिदेवस्य परबोधस्वरूपिणः ।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी ॥'

इति-श्रीकालिकाक्रमनिरूपितनीत्या महामन्त्रात्मकाकृतकाहंविमर्शारूढस्य यद्यदालापादि तत्तदस्य स्वात्मदेवताविमर्शानवरतावर्तनात्मा जपो जायते[116] । यदुक्तं श्रीविज्ञानभैरवे

'भूयो भूयः परे भावे भावना भाव्यते हि या ।
जपः सोऽत्र स्वयं नादो मन्त्रात्मा जप्य ईदृशः[117] ॥'

इति । तथा

---

११६ अनुत्तरज्ञानशालित्वात् योगिनो यत्किंचन आलापादि लौकिकव्यवहृत्यनुसारि तदस्य जपः, अहंपरामर्शसार-स्वात्मदेवताभावनातात्पर्यात्, नहि प्रकाशात्मपरप्रमातृरूपतां विना किंचिदपि प्रस्फुरेदित्यर्थः।

११७ विश्वपूरणात् परे भावे स्वस्वभावे या भावना, विमर्शना

'अहमेव परो हंसः शिवः परमकारणम् ।'

इत्यादिरूपा भाव्यते संपाद्यते, स जपः, नादोऽकृतकाहंविमर्शात्मा, जप्यो जपनीयो स्वात्मदेवः । यदुक्तम्

'सकारेण बहिर्याति हकारेण विशेत्पुनः ।
हंस-हंसेत्यमुं मन्त्रं जीवो जपति नित्यशः ॥
षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ।
जपो देव्या विनिर्दिष्टः सुलभो दुर्लभो जडैः ॥'

इति ॥ २७ ॥

ईदृग्जपव्रतवतोऽस्य चर्या[118]माह—

## दानमात्मज्ञानम् ॥ २८ ॥

प्रोक्तचैतन्यरूपस्य आत्मनो यत् ज्ञानं, साक्षात्कारः, तत् अस्य दानम्; दीयते परिपूर्णं स्वरूपम्, दीयते खण्ड्यते वि[119]श्वभेदः, दायते शोध्यते मायास्वरूपम्, दीयते रक्ष्यते लब्धः शिवात्मा स्वभावश्च अनेन इति कृ[120]त्वा ।

अथ च दीयते इति दानम्, आत्मज्ञानमेव अनेन अन्तेवासिभ्यो दीयते । तदुक्तम्

---

'नास्योच्चारयिता कश्चित्प्रतिहन्ता न विद्यते ।
स्वयमुच्चरते देवि प्राणिनामुरसि स्थितः ॥'

इति ।

११८ चर्या, स्वरूपसाक्षात्कारोपायस्थितिः कर्तव्यं वा ।

११९ विश्वरूपो धरण्यादिशिवान्तं षट्त्रिंशत्तत्त्वलक्षणो भेदः ।

१२० डुदाञ् दाने, दो अवखण्डने, दीङ् रक्षणे, दैप् शोधने, एते अत्र धातवः ।

'दर्शनात्स्पर्शनाद्वापि वितताद्भवसागरात् ।
तारयिष्यन्ति योगीन्द्राः[१२१] कुलाचारप्रतिष्ठिताः ॥'

इति ॥ २८ ॥

यथोक्तनीत्या शिवतुल्यतया नित्यमेवं व्रत-जपचर्यानिष्ठत्वात् निजशक्तिचक्रारूढः[१२२] स एव तत्त्वत उपदेश्यानां प्रतिबोधकः[१२३] इत्याह—

**योऽविपस्थो ज्ञाहेतुश्च ॥ २९ ॥**

अवीन् पशून् पाति इति अविपं 'कवर्गादिषु माहेश्वर्याद्याः पशुमातरः' (३–१९) इत्यभि-हितदृशा माहेश्वर्यादिशक्तिचक्रं, तत्र तिष्ठति विदितस्वमाहात्म्यत्वात्[१२४] प्रभुत्वेन यः प्रतपति, स ज्ञाहेतुः; जानाति इति ज्ञा ज्ञानशक्तिः, तस्या हेतुः, उपदेश्यान् ज्ञानशक्त्या प्रतिबोधयितुं[१२५]

---

१२१ योगीन्द्राणां योगिनीसिद्धादीनां दर्शन-स्पर्शन-चरुभोजन-कथन-शास्त्रसंक्रमणादिभिः उपायैः तीव्रशक्तिपातवत्सु अनुग्राह्येषु उपकर्तव्यत्वम् इत्यर्थः । कुलानां देहाक्षभुवनादीनामाचरणम् आचारः सृष्टिसंहाराख्यः तत्र अवहिताः ।

१२२ स्वशक्तिविकासमयं विश्वमध्यासीनः ।

१२३ स्वस्वरूपप्रत्यभिज्ञापकः ।

१२४ सर्वोऽयं मद्विभव इति प्रत्यभिज्ञातस्वात्मैश्वर्यत्वात् ।

१२५ स्वात्मानं प्रत्यभिज्ञापयितुमित्यर्थः ।

क्षमः । अन्यस्तु शक्तिचक्रपरतन्त्रीकृतत्वात् स्वात्मनि अप्रभविष्णुः[126] कथमन्यान् प्रबोधयेत्। यच्छब्दापेक्षया सूत्रेऽत्र तच्छब्दोऽध्याहार्यः। च शब्दो ह्यर्थे। योऽयमविपस्थः स यस्मात् ज्ञानप्रबोधनहेतुस्तस्माद्युक्तमुक्तम् 'दानमात्मज्ञानम्, (३–२८) इति।

अन्ये तु 'अक्षरसारूप्यात्[127] प्रब्रूयात्' इति निरुक्तस्थित्या 'यो' इति योगीन्द्रः. 'वि' इति विज्ञानम्, 'प' इति पदम्, 'स्थ' इति पदस्थः इत्यस्य अन्त्यमक्षरम् । 'ज्ञ' इति ज्ञाता, 'हे' इति हेयः, 'तु' इति तुच्छता, विसर्जनीयेन विसर्गशक्तिः[128], चकारेण अनुक्तसमुच्चयार्थेन कर्ता परामृश्यते इत्याश्रित्य, यो योगीन्द्रो विमर्शशक्त्या स्वरूपात्मविज्ञानपदस्थः, स ज्ञाता कर्ता च अवगन्तव्यः; तदा च अस्य हेयतां तुच्छतां निःसारतां, न तु उपादेयतामा-

---

१२६ माहेश्वर्यादिशक्तिभिः पारतन्त्र्याधानात् पशुभावमापितः ।

१२७ अश्नोतेरौणादिकसरन्-प्रत्यये, अश्नुते प्रतिशब्दमिष्टार्थप्रकाशितया वेदाङ्गानि व्याप्नोतीत्यक्षरम्, तत्सारूप्यात्, प्रतिशब्दमक्षरसमरूपसंगतशब्दैर्निर्वचनं विधेयमित्यर्थः।

१२८ ऊर्ध्वाधःसृष्टिरूपा ।

सादयति इति व्याचक्षते। एतच्च न नः प्रतिभाति, पदार्थसङ्गतेर्नातिचारुत्वात्; प्रतिसूत्रं च ईदृशव्याख्याक्रमस्य सहस्रशो दर्शयितुं शक्यत्वात् ॥ २९ ॥

अस्य च—

स्वशक्तिप्रचयोऽस्य विश्वम् ॥३०॥

यतोऽयं शिवतुल्य उक्तस्ततो यथा

'शक्तयोऽस्य जगत्कृत्स्नम्.................. ।'

इत्याद्याम्नायदृष्टया शिवस्य विश्वं स्वशक्तिमयं, तथा अस्यापि स्वस्याः संविदात्मनः शक्तेः, प्रचयः क्रियाशक्ति[129]स्फुरणरूपो विकासो, विश्वम्। यदुक्तं श्रीमृत्युजिति

'यतो [130]ज्ञानमयो देवो ज्ञानं च बहुधा स्थितम्।
नियन्त्रितानां बद्धानां त्राणं तन्नेत्रमुच्यते ॥'

कालिकाक्रमेऽपि

---

१२९ विश्वनिर्माणसामर्थ्यं क्रियाशक्तिरित्यर्थः ।

१३० देवः परमेश्वरो ज्ञानमयः, चिन्मात्रपरमार्थः; तच्च ज्ञानं बहुधा स्वातन्त्र्यात् संकोचमाभास्य नानात्वमाश्रित्य स्थितम्, अतश्च संकोचाभासभाजो ये निगूहितस्वरूपतया नियन्त्रिता आभासिता देवेन तत एव बद्धाः, तेषां नानादर्शनोपासाभिः स्वस्वरूपप्रथाहेतुतया यतो देवः त्राणं, तस्मात् निरुक्तदृशा नेत्रमुच्यते न तु चक्षुर्गोलकतया ।

'तत्तद्रूपतया[131] ज्ञानं बहिरन्तः प्रकाशते ।
ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥
न हि ज्ञानादृते भावाः केनचिद्विषयीकृताः ।
ज्ञानं तदात्मतां यातमेतस्मादवसीयते[132] ॥
अस्तिनास्तिविभागेन निषेधविधियोगतः ।
ज्ञानात्मता ज्ञेयनिष्ठा भावानां भावनाबलात् ॥
युगपद्वेदनाज्ज्ञानज्ञेययोरेकरूपता[133] ।'

इति ॥ ३० ॥

न केवलं सृष्टिदशायां निजशक्तिविकासोऽस्य विश्वं, यत् तत्पृष्ठपातिनौ—

स्थितिलयौ ॥ ३१ ॥

'स्वशक्तिप्रचयः' इत्यनुवर्तते । क्रियाशक्त्याभासितस्य विश्वस्य तत्तत्प्रमात्रपेक्षं कंचित्कालं बहिर्मुखत्वावभासनरूपा या स्थितिः, चिन्म-

---

[131] नीलसुखादिरूपतया बहिरन्तःप्रकाशमानानां भावानां प्रकाशसारत्वात् तदन्वयव्यतिरेकानुविधायित्वेन पृथक् सत्ता नास्ति इत्यर्थः ।

[132] यो यमनुपजीव्य नोपलभ्यते स तस्मात् अव्यतिरेकी, यथा मृदं विना घटः, तस्मात् ज्ञानस्यैव ज्ञेयभावात्मतया परिनिष्ठानिश्चय इत्यर्थः ।

[133] भावाभावरूपाणां नीलसुखादिभावानां, भावनाबलात् स्वात्मसाक्षात्कारबलात्, उभयोः ज्ञानज्ञेययोः एकतमसांनिध्यविरहे सत्ताया असंभवात् ऐकरूप्याभ्युपगमः ।

यप्रमातृविश्रान्त्यात्मा च यो लयः, तावेतौ एतस्य स्वशक्तिप्रचय एव; तत्तद्वेद्यं हि आभासमानं विलीयमानं च निजसंविच्छक्त्यात्मकमेव, अन्यथा अस्य संवेदनानुपपत्तेः[134]। अत एव श्रीकालिकाक्रमे

'अस्तिनास्तिविभागेन........................।'

इत्यादि स्थितिलयपरत्वेनोक्तम्। तथा

'सर्वं शुद्धं निरालम्बं[135] ज्ञानं स्वप्रत्ययात्मकम्।
यः पश्यति स मुक्तात्मा जीवन्नेव न संशयः॥'

इति॥ ३१ ॥

नन्वेवं सृष्टिस्थितिलयावस्थासु अन्योन्यभेदावभासमयीषु अस्य स्वरूपान्यथात्वं[136] मायातम्! इत्याशङ्काशान्त्यर्थमाह—

---

१३४ कल्पितशून्यमायीयादिप्रमातुः अपेक्षया विश्वस्य बाह्यतावभासमयी स्थितिः, कल्पितप्रमातृभावनिमज्जने तदपेक्षिविश्वबाह्यतानवभासनात् चिन्मयस्वरूपविश्रान्तिः विलयः, उभयस्य अस्य स्वसंविच्छक्तिमयत्वात्, तदनभ्युपगमे द्वयोरपि अनयोः उपलब्ध्यनुपपत्तेः इति तात्पर्यम्।

१३५ आलम्बात् वेद्यात् निष्क्रान्तं, क्रोडीकृताशेषवेद्यम्; स्वप्रत्ययात्मकं स्वाहन्तात्मकम्।

१३६ वेद्यपरामर्शनौन्मुख्ये तदतिरिक्तस्वात्मविमर्शननिरासोऽन्यथात्वम्।

## तत्प्रवृत्तावप्यनिरासः संवे-
## त्तृभावात् ॥ ३२ ॥

तेषां सृष्ट्यादीनां प्रवृत्तावपि उन्मज्जनेऽपि, नास्य योगिनः संवेत्तृभावात् तुर्यचमत्कारात्मकविमर्शमयात् उपलब्धृत्वात्, निरासश्चलनम्; तन्निरासे कस्यचिदप्यप्रकाशनात् । यदुक्तं तत्रैव

'नाशो[137]ऽविद्याप्रपञ्चस्य स्वभावो न विनश्यति ।
उत्पत्तिध्वंसविरहात्तस्मान्नाशो न वास्तवः ॥
यतोऽविद्या समुत्पत्तिध्वंसाभ्यामुपचर्यते ।
यत्स्वभावेन नष्टं न तन्नष्टं कथमुच्यते ॥'

इति । एतदेव स्पन्दे

'अवस्था[138]युगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥'

तथा ।

---

१३७ मायोद्भासितदेहाक्षतत्त्वभुवनादिविलयेऽपि सदोदितस्फुरणधर्मिणः संवित्स्वभावस्य उदयास्तमयाभावात् अविनाशिता, व्यवहारदशायामपि ध्वंसोत्पत्त्योः प्रकाशमानतया तदभिन्नयोः प्रकाशान्तर्विश्रान्त्या उपचर्यमाणत्वम् इत्यर्थः ।

१३८ ग्राह्यग्राहकभावभिन्नयोः भोग्यभोक्तृतयोः मध्ये भोग्यात्ममायाप्रपञ्चो भेदनिष्ठो विलीयते उदयते च, भोक्तुः पुनः चिन्मयस्य अकालकलिततया न कथंचित् विलयोदयशङ्का ।

'कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।
तस्मिँल्लुप्ते विलुप्तोऽसीत्यबुधः प्रतिपद्यते [139] ॥
न तु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम् ।
तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात् [140] ॥'

इत्यनेनोक्तम् ॥ ३२ ॥

अस्य योगिनः—

## सुखदुःखयोर्बहिर्मननम् ॥३३॥

वेद्यस्पर्शजातयोः सुखदुःखयोर्बहिरिव नीलादिवत् इदन्ताभासतया मननं संवेदनं, न तु लौकिकवत् अहन्तास्पर्शनेन; अस्य हि 'स्वशक्तिप्रचयोऽस्य विश्वम्' (३–३०) इत्युक्तसूत्रार्थनीत्या सर्वम् अहन्ताच्छादितत्वेन स्फुरति, न तु नियतं सुखदुःखाद्येव, इत्येवंपरमेतत् । योगी हि प्रशान्तपुर्यष्टकप्रमातृभावः कथं

---

१३९ यथा कश्चित् देवदत्तो गृहाद्यवस्थितः केनापि आहूतो भोः देवदत्त ! इति, स आत्मानमपह्नोतुकामः प्रत्याह नाहमस्मि इति । एवमुक्ते प्रत्युत स्थितोऽहमसीति प्रतिपादितं भवति न तु असंनिधानम्, इत्येवं प्रकारोऽप्रबुद्धविषये, तस्मात् अभावसमाध्यवस्थासु कार्याभावात् करणव्यापारविरतिमात्रेण आत्माभावप्रत्ययो भ्रान्तिरेव इत्याशयः ।

१४० अन्तर्मुखस्वरूपविनाशितायां विश्वमनीलमूकप्रायं स्यादित्यर्थः ।

सुखदुःखाभ्यां स्पृश्यते । तथा च श्रीप्रत्यभिज्ञासूत्रविमर्शिन्याम् ।

'ग्राहकभूमिकोत्तीर्णानां वास्तवप्रमातृदशापन्नानां तत्तत्स्वहेतूप[141]स्थापितसुखदुःखसाक्षात्कारेऽपि न तेषां सुखदुःखादि, नोत्पद्यत एव वा सुखादि हेतुवैकल्यात्[142], सहजानन्दाविर्भावस्तु तदा स्यात् ॥'

इत्युक्तम् । अत एव

'न दुःखं न सुखं यत्र न ग्राह्यं ग्राहको न च ।
न चास्ति मूढभावोऽपि तदस्ति परमार्थतः[143] ॥'

इति स्पन्दे निरूपितम् ॥ ३३ ॥

यतश्च उत्तीर्णपुर्यष्टकप्रमातृभावस्य योगिनो नान्तः सुखदुःखसंस्पर्शः, अत एवासौ—

## तद्विमुक्तस्तु केवली ॥ ३४ ॥

ताभ्यां सुखदुःखाभ्यां विशेषेण मुक्तः संस्कारमात्रेणापि अन्तर् असंस्पृष्टः, केवली,

---

१४१ विचित्रस्रक्चन्दनवनितादयः सुखहेतुः, द्वेष्योपगमो दुःखहेतुः ।

१४२ सुखादिहेतूनां चित्प्रकाशान्तर्म्रुडिततया चमत्करणात् तदभावः।

१४३ सुखदुःखाद्याश्रयावस्थाद्वयेन विनश्यत्स्वभावेन अस्पृष्टस्य संवित्तत्त्वस्य तदनाकलितत्वात्, सौषुप्तपदस्यापि संवेद्यत्वात् संवेदकसत्ता तत्र अभ्युपगम्यते, अन्यथा तदौत्तरकालिकस्मृत्यनुपपत्तेः ।

केवलं चिन्मात्रप्रमातृतारूपं यस्य । तदुक्तं श्रीकालिकाक्रमे

'सुखदुःखादिविज्ञानविकल्पानल्पकल्पितम् ।
भित्त्वा द्वैतमहामोहं योगी योगफलं लभेत् ॥'

इति । तु-शब्दो वक्ष्यमाणापेक्षया विशेषद्योतकः, एवमुत्तरसूत्रगतोऽपि एतत्सूत्रापेक्षया ॥ ३४ ॥

यदाह—

**मोहप्रतिसंहतस्तु कर्मात्मा ॥३५॥**

मोहेन अज्ञानेन, प्रतिसंहतः तदेकघनः, तत एव सुखदुःखाश्रयो यः, स पुनः कर्मात्मा नित्यं शुभाशुभकलङ्कितः । तदुक्तं तत्रैव

'यदविद्यावृततया विकल्पविधियोगतः ।
शिवादीन्नैव झटिति समुद्भावयतेऽखिलान् ॥
ततः शुभाशुभा भावा लक्ष्यन्ते तद्वशत्वतः ।
अशुभेभ्यश्च भावेभ्यः परं दुःखं प्रजार्यते ॥'

इति ॥ ३५ ॥

---

१४४ अज्ञजनस्य घटपटादिविविधविकल्पजालकल्पनामाश्रितस्य शिवादितत्त्वानाम् अनुत्तरचिद्घनस्वभावतया अपरामर्शनात् मायीयमल-मलिनतां प्राप्य शुभाशुभकार्ममलसमुत्थदुःखानुभवः । तज्ज्ञस्य तु विश्वत्र भावपटले 'स्वात्मविलसितमिदम्' इति प्रविविक्तानस्य सहजसुखा-विर्भाव इत्यर्थः ।

एवमीदृशस्यापि कर्मात्मनो यदा अनर्गलमाहेशशक्तिपातवशोन्मिषितसहजस्वातन्त्र्ययोगो भवति, तदा अस्य—

भेदतिरस्कारे सर्गान्तरकर्मत्वम् ॥ ३६ ॥

शरीरप्राणाद्यहन्ताभिमानात्मनः सकलप्रलयाकलादिप्रमात्रु[१४५]चितस्य भेदस्य, तिरस्कारे स्थितस्यापि चिद्घनस्वभावोन्मज्जनाद् अपहस्तने सति, क्रमेण मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वरात्मकस्वमाहात्म्यावाप्तौ, सर्गान्तरकर्मत्वं यथाभिलषितनिर्मेयनिर्मातृत्वं भवति । तथा च श्रीस्वच्छन्दे

'त्रि[१४६]गुणेन तु जप्तेन स्वच्छन्दसदृशो भवेत् ।'

इति स्वच्छन्दसादृश्येन भेदतिरस्कारमस्य उक्त्वा

---

१४५ मायापदे शून्यप्रमातृरूपाः प्रलयाकलाः, तेषां प्रलीनकल्पं विश्वं प्रमेयम् स्वौचित्यात्; सकला ब्रह्मादिकीटान्ताः क्षेत्रज्ञा भिन्नभिन्नप्रायं विश्वं पश्यन्तः, तेषां तथाभूतमेव सर्वतो भिन्नं परिमितं प्रमेयम् । इत्थं प्रमातॄणां यथा-स्वस्वभावं भेदाभास इत्यर्थः ।

१४६ त्रैगुण्यमनेकगुणतोपलक्षणम् । महामन्त्रात्मकपरिपूर्णाहंभावेन स्वस्वभावपरामर्शने अवहितत्वात् स्वच्छन्दसादृश्यम् ।

'ब्रह्मविष्ण्विन्द्रदेवानां सिद्धदैत्योरगेशिनाम् ॥
भयदाता च हर्ता च शापानुग्रहकृद्भवेत् ।
दर्पं हरति कालस्य पातयेद्भूधरानपि ॥'

इत्युक्तम् ॥ ३६ ॥

न च एतदस्य असंभाव्यम्, यतः—

**करणशक्तिः स्वतोऽनुभवात्॥३७॥**

स्वतः स्वस्मादेवानुभवात् संकल्पस्वप्नादौ, करणशक्तिः[148] तत्तदसाधारणार्थनिर्मातृत्वम् आत्मनः सिद्धमेव। अनेनैव आशयेन श्रीप्रत्यभिज्ञायाम्

'अत एव यथाभीष्टसमुल्लेखावभासनात्[149] ।
ज्ञानक्रिये स्फुटे एव सिद्धे सर्वस्य जीवतः ॥'

इत्युक्तम्। तथासंभवात् यदि चैतत् गाढा-

---

१४७ उरगानामीशते तच्छीला इति उरगेशिनः शेषादयः, शापानुग्रहादिकृत्त्वात् सिद्धादीन् प्रति अस्य भयदातृभयहर्तृत्वम् ।

१४८ विश्ववैचित्र्यनिर्माणशक्तिः ।

१४९ यथाभिमतवस्तूनां बहिरसत्त्वात् अननुभूतानामपि सम्यगुल्लेखनात् प्रकाशनाच्च हेतोः यस्य कस्यचित् ब्रह्मादिकीटान्तस्य प्राणिनः उल्लेखनात्मिका क्रियाशक्तिः अवभासनात्मिका ज्ञानशक्तिश्च स्वाभाविकी इति सिद्ध्यति, तस्मात् कल्पितप्रमातृभूमिकायामपि व्यतिरिक्तेश्वरोपक्लृप्तप्राच्यसृष्टिमनुपजीव्यैव यथाभिमतोल्लेखनादिव्यापारसंभावनाभावात् ज्ञानक्रियालक्षणस्यैश्वर्यस्यैव स्फुटं प्रत्यभिज्ञेयतावश्यंभावः ।

भिनिवेशेन विमृशति, तदा सर्वसाधारणां[150] अभीष्टार्थनिर्मातृतापि भवति। तदुक्तं तत्त्वगर्भे

'यदा[151] तु तेऽपि सुव्यक्तस्वसामर्थ्यगुणोज्ज्वलाः।
भवेद्दृढतरादूरदारिता दार्ढ्यदीनता।
तदा च तेषां संकल्पः कल्पपादपतां व्रजेत्॥'

इति ॥ ३७ ॥

यतश्च करणशक्तिशब्दोक्त्या तुर्यात्मा स्वातन्त्र्यशक्तिरेव बोधरूपस्य प्रमातुः सारम्[152], अतो मायाशक्त्यपहस्तिततत्स्वरूपोत्तेजनाय—

त्रिपदाद्यनुप्राणनम् ॥३८॥

त्रयाणां भावौन्मुख्यतदभिष्वङ्गतदन्तर्मुखी-भावनामयानां सृष्टिस्थितिलयशब्दोक्तानां प-

१५० विमर्शातिशयवशात् सर्वजनैः तन्निर्मितिः द्रष्टुं शक्यते, प्रसिद्ध-विश्वामित्रादिमुनिरचितनूतनस्वर्गसृष्टिगाथावत् इत्यर्थः।

१५१ यदा ते योगिनः सुस्फुटं स्वकीयज्ञानक्रियाशक्तिशालिनः, तदा तेषां अभीष्टपदार्थनिर्मितेः दार्ढ्यदीनता अस्थैर्यं दृढतरं यथा, तथा अदूरमचिराय दारिता खण्डिता भवति, तत्संकल्पस्य च कल्पतरुवत् चिन्तिताशुदायित्वात् इत्यर्थः।

१५२ अन्यथा स्वातन्त्र्यसारताविरहे निर्विमर्शस्य संवित्प्रकाशस्य तत्त-द्भावजातप्रतिफलिततायामपि स्फटिकादिवत् जाड्यापत्तेः विश्वव्यवहार-विप्रलोपः स्यादित्यर्थः।

दानामवस्थानां, यद् आदि प्रधानं त्रिचमत्कृतित्वेन आनन्दघनं तुर्याख्यं पदं मायाशक्त्याच्छादितमपि तत्तद्विषयोपभोगाद्यवसरेषु विद्युद्वदाभासमानं, तेन तत्तदवसरेषु क्षणमात्रोदितेनापि, अनुप्राणनम् अन्तर्मुखतद्विमर्शावस्थितितारतम्येन अनुगततया प्राणनम्, आत्मनस्तेनैव जीवितेनापि जीवितस्य उत्तेजनं कुर्यात्[१५३]। तदुक्तं श्रीविज्ञानभैरवे

'अन्तः स्वानुभवानन्दा[१५४] विकल्पोन्मुक्तगोचरा ।
यावस्था भरिताकारा भैरवी भैरवात्मनः ॥
तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम् ।'

इत्याद्युपक्रम्य

---

१५३ वनितादिविषयोपभोगेषु विगलितवेद्यान्तरसंवेदनं तुर्यपदमुद्यदपि पशुजनैः प्रत्यक्षरुयादिविषयव्यवहितं संवेद्यते, निरावरणं तु तदवहितैः; एतेन जीवितात्मतुर्यपदेन जीवत्स्वरूपस्य आत्मनः तस्मिन् एव अवहितीकरणमुत्तेजनम् इत्यर्थः ।

१५४ अन्तः पूर्णाहन्तायां स्वानुभवः स्वप्रकाश आनन्द एव रूपं यस्याः सा अकिंचिच्चिन्तनमयी, अवस्थातुः भैरवरूपस्य आत्मनो मम अव्यतिरिक्ता शक्तिरवस्था, भरितोऽशेषविश्वाभेदचमत्कारमय आकारः स्वरूपं यस्याः सा तादृशी, तदेव च तत्त्वतः परमार्थतो विमलं, स्वभित्त्याभासितजगदनाच्छादितं विश्वपूरमशेषावभासकं वपुः स्वरूपं ज्ञेयम् न तु भूतमयम् ।

'शक्तिसंगमसंक्षुब्धशक्त्यावेशावसानिकम्[१५५] ।
यत्सुखं ब्रह्मतत्त्वस्य तत्सुखं स्वाक्यमुच्यते ॥

लेहनामन्थनाकोटैः[१५६] स्त्रीसुखस्य भरात्स्मृतेः ।
शक्त्यभावेऽपि देवेशि भवेदानन्दसंप्लवः ॥

आनन्दे महति प्राप्ते दृष्टे वा बान्धवे चिरात् ।
आनन्दमुद्गतं ध्यात्वा तन्मयस्तल्लयीभवेत् ॥

जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद्भैरवं भावं महानन्दमयो[१५७] भवेत् ॥

---

१५५ व्यक्तस्त्रीसंगमं विना तत्संगमोपजनितानन्दवृत्तिस्मरणेनैव य आनन्दोद्गमः स स्वीयो ब्रह्मानन्दोऽवसेयः । यदुक्तम्

' जायया संपरिष्वक्तो न बाह्यं वेद नान्तरम् ।
निदर्शनं श्रुतिः प्राह मूर्खस्तं मन्यते विधिम् ॥

न सृष्टिर्जायते लिङ्गान्न भगान्नापि रेतसः ।
आनन्दोच्छलिता शक्तिः सृजत्यात्मानमात्मना ॥'

इत्याद्युक्त्या स्त्रीसंगानन्दाविर्भूतायाम् आनन्दशक्तौ समावेशस्य, अन्ते स्त्र्यादिसंपर्काद्यभावेन स्वात्ममात्रनिष्ठं ब्रह्मसंबन्ध्येव भावनीयम्, यद्वा विश्वस्फुरणशक्तिसंगमसंक्षुब्धायां चिच्छक्तौ य आवेशः तस्य अवसाने भवं सुखं स्वरूपस्यैव ।

१५६ लेहनमधरासवास्वादनम्, आमन्थनं प्रधानाङ्गविलोडनम् आलिङ्गनं वा, आकोटनमाघात; नखक्षतादि वा, इत्याद्युद्दीपनादिविभावैरुद्दीपितस्य आनन्दस्य अतिशयस्मरणात् उल्लसदानन्दमयः स्वात्मैव विभाव्यः ।

१५७ मिष्टान्नभोजनक्षीरपानादिरसास्वादनात् विजृम्भितानन्दोत्कर्षस्य आनन्दभरितावस्थां विभावयतोऽनन्यवृत्तितया अनुत्तरसुखावाप्तिः

गीतादिविषयास्वादासमसौख्यैकतात्मनः[158] ।
योगिनस्तन्मयत्वेन मनोरूढेस्तदात्मता ॥'

इत्यादिना उपायप्रदर्शनेन प्रपञ्चितम् । एतच्च

'अतिक्रुद्धः[159] प्रहृष्टो वा किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः ॥'

इत्यादिना

'........................................प्रबुद्धः स्यादनावृतः ॥'

इत्यन्तेन प्रदर्शितम् । एतत् स्पन्दनिर्णये निराकाङ्क्षं[160] मयैव निर्णीतम् । 'त्रिषु चतुर्थम्....' (३–२०) इति सूत्रेण जागरादौ तुर्यानुप्राणनमुक्तम् । अनेन सर्वदशानुगतादिमध्यान्तेषु सृष्टिस्थितिसंहारनिरूपितया भङ्ग्या निरूपितेषु इति विशेषः[161] ॥ ३८ ॥

---

१५८ गीतमादि येषां वंशवीणाकलरवादीनां विषयाणां चमत्करणेन उपजनितानुपमसुखे समाहितचित्तस्य शाक्तस्पर्शावेशेन ब्रह्मसुखावाप्तिः ।

१५९ अतिक्रोधादिना प्रकारत्रयेण दुःखसुखमोहात्मविषयग्रहणरूपान्तःकरणव्यापारमयेन, तथा धावच्छब्दोपलक्षितेन कर्मेन्द्रियव्यापारेण च, जाग्रदवस्थाविषयाणि अन्यानि एवं-विधानि प्रकारान्तराणि संग्राह्याणि। इत्थं विचित्रावस्थासु निरालम्बनचित्तवृत्तिः यां भूमिकामधितिष्ठेत् तत्र पदे स्वभावमात्राधारस्य प्रत्यस्तमितसमस्तविशेषशक्तिचक्रपरमात्मधर्मस्य प्रतिष्ठितस्पन्दस्य उपलब्धिरित्यर्थः ।

१६० असंदेहनिर्णयात् प्रबुद्धविषयजिज्ञासाया असंभवात् इत्यर्थः ।

१६१ पौर्वापर्येण प्रोक्तयोरनयोः सूत्रयोः अर्थैक्यतास्वीकरणेपि सामान्यविशिष्टार्थरूपरचनासद्भावात् पौनरुक्त्यविरोधपरिहारः ।

एतच्च त्रिपदाद्यनुप्राणनमन्तर्मुखत्वावष्टम्भत्वदशायामेवासाद्य न संतुष्येत्, अपि तु—

चित्तस्थितिवच्छरीरकरण-
बाह्येषु ॥ ३९ ॥

'त्रिपदाद्यनुप्राणनम्' इत्येव। यथा अन्तर्मुखरूपायां चित्तस्थितौ तुर्येणानुप्राणनं कुर्यात्, तथा शरीरकरणबाह्याभासात्मिकायां बहिर्मुखतायामपि आन्तरविमर्शावष्टम्भबलात् क्रमात्क्रमं तारतम्यभाजा तेन अनुप्राणनं कुर्यात्[१६२]। यदुक्तं श्रीविज्ञानभैरवे

'सर्वं जगत्स्वदेहं वा स्वानन्दभरितं स्मरेत्।
युगपत्स्वामृतेनैव परानन्दमयो भवेत्[१६३] ॥'

इति। एवं हि आनन्दात्मा स्वातन्त्र्यशक्तिः सर्वदशासु स्फुटीभूता सती यथेष्टनिर्माणकारिणी भवति ॥ ३९ ॥

---

१६२ कादाचित्कस्वरूपविश्रान्त्यात्मिकायां दशायां, विद्युत्प्रकाशमिव क्षणमात्रस्थायिनं तुर्यचमत्कारमासाद्य, आनन्दभरिततया यथा संतोषः, एवं बहिरौन्मुख्येऽपि संततमानन्दमयपरमार्थामृतरसपर्यवसेकात्, तद्विमर्शानन्दविकसितत्वम् इति तात्पर्यम्।

१६३ सर्वत्र बहिरभिमते वस्तुजाते चिदानन्दघनरसकणिकाच्छुरिततया परिपूर्णां शिवतां विभावयतो जनस्य अनुत्तरानन्दमयस्वरूपसमावेश इत्यर्थः।

यदा तु अयमेव आन्तरीं तुर्यदशाम्[164] आत्मत्वेन न विमृशति, तदा देहादिप्रमातृताभावाद् अपूर्णमन्यतात्मकाणवमलरूपात्—

**अभिलाषाद्बहिर्गतिः संवाहस्य ॥४०॥**

शक्तिचक्राधिष्ठितैः कञ्चुका[165]न्तःकरणबहिष्करणतन्मात्रभूतैः सह, संवाह्यते योनेर्योन्यन्तरं नीयते इति संवाह्यः, कर्मात्मरूपः पशुः तस्य

'......................अभि[166]लाषो मलोऽत्र तु ।'

इति श्रीस्वच्छन्दोक्तनीत्या अपूर्णमन्यतात्मकाविद्याख्याणवमलरूपाद् अभिलाषाद्धेतोर्बहिर्गतिः, विषयोन्मुखत्वमेव भवति; न तु अन्तर्मुखरूपावहितत्वं जातुचित् । यदुक्तं कालिकाक्रमे

---

१६४ अनुत्तरानन्दमयीमवस्थामित्यर्थः ।

१६५ कञ्चुकैः मायासहितैः कलाविद्यादिभिः ।

१६६ अभिलाषः अपूर्णम्मन्यतात्मा लौलिकारूपः, न तु किंचित् मे स्यात् इति ईदृक्, रागतत्त्वस्य एवमात्मकत्वात् । अत्र तु एतस्मिन् आणवे मले भित्तिभूते अन्यत् मलद्वयमाधेयमस्ति इत्यर्थः ।

'यदविद्यावृततया विकल्पविधियोगतः ।
शिवादीन्नैव झटिति समुद्भावयतेखिलान् ॥
ततः शुभाशुभा भावा लक्ष्यन्ते तद्वशत्वतः ।
अशुभेभ्यश्च भावेभ्यः परं दुःखं प्रजायते[167] ॥
अतथ्यां कल्पनां कृत्वा पच्यन्ते नरकादिषु ।
स्वोत्थैर्दोषैश्च दह्यन्ते वेणवो वह्निना यथा ॥
मायामयैः सदा भावैरविद्यां परिभुञ्जते ।
मायामयीं तनुं यान्ति ते जनाः क्लेशभाजनम्[168] ॥'

इति ॥ ४० ॥

**यदा तु पारमेशशक्तिपातवशोन्मिषितं स्वं स्वभावमेव विमृशति, तदा अभिलाषाभावाद् न अस्य बहिर्गतिः, अपि तु आत्मारामतैव[169] नित्यमित्याह—**

---

१६७ अविद्यावृतस्य पशोः संततप्रसरत्स्वारसिकविकल्पक्षुब्धतया चित्तत्त्वमपरामृशतः पुण्यापुण्यकलङ्कस्पृष्टत्वात् तत्तन्निकृष्टदुष्फलपरिणामः।

१६८ मिथ्याकल्पनोपक्लृप्तिपूर्वं स्वसंघट्टजाग्निदग्धवेणुवत् स्वोत्पन्नकामादिदोषैः निरयव्यथानुभवनानन्तरम् असत्यकल्पभोग्यसंभोगाय भोगायतनपरिग्रहः, पुनरप्येवम्, इत्थं क्लेशात् क्लेशान्तरगतिरविरता भवति आ अनुत्तरशिवज्ञानावाप्तेः इत्याशयः ।

१६९ अपूर्णमन्यतात्मकआणवमलरूपाभिलाषाकलिताशयस्य, बहिरन्तरं स्वं चिदानन्दघनस्वरूपं पश्यतः, चित्प्रमातृत्वस्फुरणचमत्कृतिकरणं स्वात्मारमणम् ।

## तदारूढप्रमितेस्तत्क्षयाज्जीव-
## संक्षयः ॥ ४१ ॥

तदिति पूर्वनिर्दिष्टसंवेद्यात्मनि तुर्यपदे, आरूढा तद्विमर्शनपरा, प्रमितिः संवित् यस्य योगिनस्तस्य। तदिति अभिलाषक्षयात्, जीवस्य संवाह्यात्मनः पुर्यष्टकप्रमातृभावस्य, क्षयः प्रशमः; चित्प्रमातृतयैव स्फुरति इत्यर्थः। यदुक्तं तत्रैव

'यथा स्वप्ना[१७०]नुभूतार्थान्प्रबुद्धो नैव पश्यति ।
तथा भावनया योगी संसारं नैव पश्यति ॥'

इति । तथा

'निरस्य सदसद्वृत्तीः संश्रित्य पदमान्तरम् ।
विहाय कल्पनाजालमद्वैतेन परापरम् ॥

---

१७० यथा स्वापावस्थायां हृदि अत्यन्ताल्पप्रदेशे अनुभूयमानान्यपि विचित्रोपवननदीपर्वतपुरादीनि वस्तुतोऽसन्ति तदात्वप्रकाशनानि प्रबुद्धो जनः चिदात्मनः स्वातन्त्र्यविलसितमभिमन्यते, एवं जागरायां स्वातन्त्र्यविजृम्भितं चिदनतिरिक्ततया अनवभासनात् चिदभिन्नं शिवमयमेव विश्वं भावनापरिनिष्पत्त्या पर्यालोचयतो योगिनः संसारदृष्टिविलोपः । संवित् किल विश्ववैचित्र्यावभासनेच्छया ग्राहकतामाश्रित्य ग्राह्यरूपेण स्फुरति, इति संवित्स्फुरणस्यैव विपरीतभावनया संसारदृष्टिः, अवैपरीत्येन भावनातिशयात् तद्विनष्टौ पुनः स्वात्मैश्वर्यचमत्कार इत्यर्थः ।

यः स्वात्मनिरतो नित्यं कालग्रासैकतत्परः।
कैवल्यपदभाग्योगी स निर्वाणपदं लभेत्[१७१] ॥'

इति। कैवल्यपदभागिति इन्द्रियतन्मात्राभिरसंवाह्यः ॥ ४१ ॥

नन्वेवं जीवसंक्षये सति अस्य देहपातः प्राप्तः, न च असौ सुप्रबुद्धस्यापि देहिनः सद्य एव दृश्यते, तत्कथमयं तदारूढप्रमितिः?[१७२] इत्याशङ्क्याह—

भूतकञ्चुकी तदा विमुक्तो भूयः
पतिसमः परः ॥ ४२ ॥

तदेति अभिलाषक्षयात्, जीवसंक्षये पुर्यष्टकप्रमातृताभिमानविगलने सति, अयं भूतकञ्चुकी, शरीरारम्भीणि भूतानि कञ्चुकमिव व्यतिरिक्तं प्रावरणमिव, न तु अहन्तापदस्प-

---

१७१ नीलसुखाद्यात्मसदसद्वृत्तीनाम् अविकल्पपरामर्शेन परापरकलनानां च प्रसरनिरसनपुरःसरं पूर्णाहन्तापदमवष्टभ्य स्वात्मनिभालनप्रकर्षात् कलनात्मनो 'जीवामि' इति कलामारभ्य क्षित्यन्तमास्थितस्य स्थूलस्य कालस्य नैबिड्येन ग्रसनप्रवणत्वात् निर्वाणपदलब्धिः इत्यर्थः।

१७२ देहसद्भावे तुर्यपदारूढिविरोधादित्यर्थः।

र्शीनि[173] यस्य, तथाभूतः सन् विमुक्तो निर्वाणभाक्; यतो भूयो बाहुल्येन पतिसमः चिद्घनपारमेश्वरस्वरूपाविष्टः, तत एव परः पूर्णः, 'शरीरवृत्तिर्व्रतम्' (३–२६) इत्युक्तसूत्रार्थनीत्या दलकल्पे[174] देहादौ स्थितोऽपि, न तत्प्रमातृतासंस्कारेणापि स्पृष्टः। तदुक्तं श्रीकुलरत्नमालायां

'यदा गुरुवरः सम्यक् कथयेत्तन्न संशयः।
मुक्तस्तेनैव कालेन यन्त्रस्तिष्ठति केवलम् ॥
किं पुनश्चैकतानस्तु[175] परे ब्रह्मणि यः सुधीः।
क्षणमात्रस्थितो योगी स मुक्तो मोचयेत्प्रजाः ॥'

इति। श्रीमृत्युजित्यपि

'निमेषोन्मेषमात्रं तु तत्त्वं यद्युपलभ्यते ।
तदैव किल मुक्तोऽसौ न पुनर्जन्म चाप्नुयात् ॥'

इति। कुलसारेऽपि

---

१७३ कल्पितपुर्यष्टकादिशरीरे पशुजनवत् परिमिताहंभावविगलनादित्यर्थः।

१७४ दलः जीर्णनिर्मोकः। इदं तात्पर्यम्, यथा मुक्तायां त्वचि सर्पस्य अहन्ताभिमानाग्रहणम्, एवं शिवज्ञानाभ्यसनेन पृथक्तया परामृष्टे देहादौ प्रमातृताभिमानाभावः। यद्वा दलः खड्गपिधानम् यथा खड्गाद्व्यतिरिक्तः, तथा व्यतिरिक्ते देहे तत्प्रमातृभावेन नायं स्पृश्यते।

१७५ एकतानोऽनन्यवृत्तिरित्यर्थः।

'अहो तत्त्वस्य माहात्म्यं ज्ञातमात्रस्य सुन्दरि।
श्रोत्रान्तरं तु संप्राप्ते तत्क्षणादेव मुच्यते ॥'

इति ॥ ४२ ॥

ननु भूतकञ्चुकित्वमपि अस्य कस्मात् तदैव न निवर्तते ! इत्याह—

## नैसर्गिकः प्राणसंबन्धः ॥ ४३ ॥

निसर्गात् स्वातन्त्र्यात्मनः स्वभावात् आयातो नैसर्गिकः, प्राणसंबन्धः, संवित् किल भगवती विश्ववैचित्र्यम् अवबिभासयिषुः संकोचावभासपूर्वकं संकुचदशेषविश्वस्फुरत्तात्मकप्राणनारूपग्राहकभूमिकां श्रित्वा ग्राह्यरूपजगदाभासात्मना स्फुरतीति नैसर्गिकः, स्वातन्त्र्यात् प्रथममुद्भासितोऽस्याः प्राणसंबन्धः[१७६]। तथा च श्रीवाजसनेयायाम्

'या सा शक्तिः परा सूक्ष्मा व्यापिनी निर्मला शिवा।
शक्तिचक्रस्य जननी परानन्दामृतात्मिका ॥

---

१७६ नैसर्गिकप्राणसंबन्धात् तदवस्थित्यवधिः कञ्चुकावस्थितिः, तयोः साहचर्यं मितप्रमातृनिष्पादितकार्मपाशाधीनम्। अतश्च प्राक्तनसंचितमिश्रकर्मोत्पन्नं भोगायतनं प्रारब्धोपनतभोग्यभोगादेव क्षीयते नान्यथा, तस्मात् तत्त्वविदो वपुषः चक्रभ्रमिवत् अवस्थानमारब्धभोगातिवाहनप्रयोजनम् इत्यर्थः।

महाघोरेश्वरी चण्डा सृष्टिसंहारकारिका ।
त्रिवहं त्रिविधं त्रिस्थं बलात्कालं प्रकर्षति[177] ॥'

इति संविद एव भगवत्याः प्राणक्रमेण नाडित्रयवाहिसोमसूर्यवह्न्यात्मावस्थितातीतानागतवर्तमानरूपबाह्यकालोल्लासन[178]विलापनकारित्वमुक्तम् । तदुक्तं स्वच्छन्देऽपि

'प्राणः[179] प्राणमयः प्राणो विसर्गापूरणं प्रति ।
नित्यमापूरयत्येष प्राणिनामुरसि स्थितः ॥'

इति । प्राणस्य

---

१७७ प्राणपरिणता जीवनरूपा परा शक्तिः घोरातिघोरादिशक्तिचक्रजननात् तदीशित्री स्वरूपगोपनोन्मुखत्वात् चण्डरूपा, तस्या एव त्रुट्यादिशक्तिकालपरिमितिपर्यन्तं कालकर्षणात् तत्सृष्टिसंहर्तृत्वम् । त्रिवहमिति, त्रिषु इडापिङ्गलासुषुम्नामार्गेषु वहति इति; त्रिविधं, सोमसूर्याग्निरूपम्; त्रिस्थम्, अतीतादिषु स्थितम् ।

१७८ उल्लासनं बहिःसृष्टिः, विलापनम् अन्तः संहरणम् ।

१७९ हकारस्तु स्मृतः प्राण इति योऽशेषवाच्यवाचकाविभागविमर्शमयो हलाकृतिः प्राण उक्तः, स एव, स्वातन्त्र्यावभासितसंकोचपुरःसरमवरोहणक्रमेण, प्रकृतं रूपं यस्य प्राणनरूपसामान्यप्राणस्य, स विसर्गापूरणं प्रति, सर्वैरेव सुषिरभागैः बहिः तत्तद्भावावभाससृष्टिरूपविसर्गार्थे, तदवभासपुरःसरं प्रवेशयुक्त्या तदाहरणेन अन्तः आपूरणार्थं प्रकर्षेण अननात् ध्वननात् अर्थजिघृक्षाग्रहणविश्रान्तिदशोचितात् विमर्शात् प्राण इत्यर्थः । एतदेव स्फुटयति नित्यमिति । सर्वदेहगतोऽपि अयं प्राणिनामुरसि स्फुटमुपलभ्यमानत्वेन अवस्थितो नित्यमापूरयन्, अर्थात् प्राणिनोऽर्थान् च, प्रवेशनिर्गमाभ्यां विमर्शमयं जीवनं कुरुते इत्युत्तरेण संबन्धः ।

'हकारस्तु स्मृतः प्राणः स्वप्रवृत्तो हलाकृतिः ।'

इत्युक्तनीत्या श्रीस्वच्छन्दभट्टारकरूपप्राणमयत्वात् विसर्गापूरतया सृष्टिसंहारकारित्वमभिहितम् इति युक्तमुक्तम् 'नैसर्गिकः प्राणसंबन्धः' इति। अत एव श्रीभट्टकल्लटेन प्राणाख्यनिमित्तदार्ढ्यम्

'प्राक् संवित् प्राणे परिणता।'

इति तत्त्वार्थचिन्तामणावुक्तम् ॥ ४३ ॥

अतश्च स्थितेऽपि नैसर्गिके प्राणसंबन्धे यस्तदारूढे[१८१] आन्तरीं कलां विमृशन्नास्ते स लोकोत्तर एव इत्याह—

---

१८० योऽयं, हल् आकृतिः यस्य स अनच्कोऽनाहतध्वन्यात्मा

'स्वयमुच्चरते देवि प्राणिनामुरसि स्थितः।'

इति नीत्या स्वप्रवृत्तः

'नादाख्यं यत्परं बीजम् ....................

इति तन्त्रान्तरोक्तस्थित्या सर्वस्य स्वतः स्फुरन्, स एष प्राणः प्राणनापरपर्यायो जीवः स्मृतो, गुरुपारंपर्येण अविच्छेदेन अधीतः।

अथ च धूलिभेदानुसारेण हलाकृतिः अशेषं विश्वं गर्भीकृत्य कुण्डलिन्याकारः प्रसुप्तभुजगरूपः स्वप्रवृत्तः स्वयमेव नादामर्शरूपतां निमज्ज्य प्राणात्मकं रूपमाविश्य स्थितः, यतः पारमेशी बोधाख्या शक्तिः विश्वं गर्भीकृत्य परा कुण्डलिका सती विमर्शरूपतया नादात्मवर्णकुण्डलिकात्मतया भाति इत्याम्नायः। एवं च व्याख्यातरूपः प्राण एव हंसः, ऊर्ध्वमधश्च स्वरसेन वहन् हानसमादानधर्मकहकारसकारविमर्शरूपतया स्फुरणात्।

१८१ तदारूढ इति, प्राणनारूपग्राहकभूमिकामाश्रित इत्यर्थः।

नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्यसौषुम्नेषु ॥४४॥

सर्वनाडीचक्रप्रधानरूपेषु सव्यापसव्यसौषुम्नेषु दक्षिणवाममध्यनाडीपदेषु, या नासिका, नसते कौटिल्येन वहति इति कृत्वा, कुटिलवाहिनी प्राणशक्तिः, तस्याः अन्तरिति आन्तरी संवित्, तस्याः अपि मध्यं सर्वान्तरतमतया प्रधानम् ।

'तस्य देवातिदेवस्य परबोधस्वरूपिणः ।
विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी ॥'

इति श्रीकालिकाक्रमोक्तनीत्या यत् विमर्शमयं रूपं तत्संयमात् अन्तर्निभालनप्रकर्षात्[१८२]; किमत्र उच्यते, अयं हि सर्वदशासु देदीप्यमानो निर्व्युत्थानः परः समाधिः । तदुक्तं श्रीविज्ञानभैरवे

'ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् ।
योगिनां तु विशेषोऽयं संबन्धे सावधानता[१८३] ॥'

इति ॥ ४४ ॥

---

१८२ भूयोभूयः अन्तर्मुखस्वरूपे दार्ढ्येन अवहितत्वात् चित्तधारणं निभालनम्, 'भल' धारणे इति धात्वर्थात् ।

१८३ प्राणापानगत्यात्मग्राह्यग्राहकविज्ञानं सर्वप्रमातृसाधारणम्, योगिनां तु तत्संचारे परप्रमात्रावेशावहितत्वम् ।

एवमीदृशस्य योगफलं दर्शयन् प्रकरणमुपसंहरति—

भूयः[१८४] स्यात्प्रतिमीलनम् ॥४५॥

चैतन्यात्मनः स्वरूपात् उदितस्य अस्य विश्वस्य भूयः पुनः, विगलितभेदसंस्कारात्मना बाहुल्येन च प्रतिमीलनम्, चैतन्याभिमुख्येन निमीलनं, पुनरपि चैतन्यात्मस्वस्वरूपोन्मीलनरूपं परयोगाभिनिविष्टस्य योगिनो भवति। तदुक्तं श्रीस्वच्छन्दे

'उन्मना[१८५]परतो देवि तत्रात्मानं नियोजयेत्।
तस्मिन्युक्तस्ततो ह्यात्मा तन्मयश्च प्रजायते ॥'

इति । तथा च

'उद्बोधितो यथा वह्निर्निर्मलोऽतीव भास्वरः।
न भूयः प्रविशेत्काष्ठे तथात्माध्वनो[१८६] उद्धृतः ॥
मलकर्मकलाद्यैस्तु निर्मलो विगतक्लमः ।
तत्रस्थोऽपि न बाध्येत यतोऽतीव सुनिर्मलः ॥'

---

१८४ भूयःशब्दस्य बाहुल्यपुनस्त्वरूपद्वैयर्थ्यम् ।

१८५ समनाशक्तेः परतो य आत्मन उन्मनाशक्तियोगः स तादात्म्यरूपः, तत्र औन्मनसे परमशिवधाम्नि निर्विकल्पविमर्शोऽपि नास्ति वेद्यत्वाभावात् । वेद्यताया समनावधेः पाशजालमयतया सविकल्परूपत्वात् ।

१८६ षडध्वात्मनः पाशजालादित्यर्थः ।

इति । भूयः स्यादित्यभिदधतोऽयमाशयः, यत् शिवत्वमस्य योगिनो न अपूर्वम्, अपि तु स्वभाव एव, केवलं मायाशक्त्युत्थापितस्वविकल्पदौरात्म्यात् भासमानमपि तत् नायं प्रत्यवमष्टुं क्षमः, इत्यस्य उक्तोपायप्रदर्शनक्रमेण तदेव अभिव्यज्यते इति शिवम् ॥ ४५ ॥

'सेयमागमसंवादस्पन्दसंगतिसुन्दरा ।
वृत्तिः शैवरहस्यार्थे शिवसूत्रेषु दर्शिता ॥ १ ॥

शिवरहस्यनिदर्शनसंस्रवन्–
नवनवामृतसाररसोल्बणाम् ।
सुकृतिनो रसयन्तु भवच्छिदे
स्फुटमिमां शिवसूत्रविमर्शिनीम् ॥ २ ॥

इयमरोचकिनां रुचिवर्धिनी
परिणतिं तनुते परमां मतेः ।
रसनमात्रत एव सुधौघवत्–
मृतिजराजननादिभयापहृत् ॥ ३ ॥

देहप्राणसुखादिभिः परिमिताहन्तास्पदैः संवृत–
श्चैतन्यं चिनुते निजं न सुमहन्माहेश्वरं स्वं जनः ।
मध्ये बोधसुधाब्धि विश्वमभितस्तत्फेनपिण्डोपमं
यः पश्येदुपदेशतस्तु कथितः साक्षात्स एकः शिवः ॥४॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवप्रोक्तं सूत्रं रहस्यसमुज्ज्वलं
प्रसभविलसत्सद्युक्त्यान्तः समुत्प्लवदायि तत् ॥५॥

इति श्रीमन्महामाहेश्वराचार्यवर्याभिनवगुप्तपादपद्मोपजीविश्रीक्षेमराजविरचितायां शिवसूत्रविमर्शिन्यामाणवोपायप्रकाशनं नाम तृतीय उन्मेषः ॥ ३ ॥

समाप्ता चेयं शिवसूत्रविमर्शिनी ॥

कृतिः श्रीक्षेमराजस्य क्षेमायास्तु विमर्शिनाम् ।
शिवस्वात्मैक्यबोधार्था शिवसूत्रविमर्शिनी ॥

अथ

# शिवसूत्रविमर्शिन्यां परिशिष्टभागः।

तत्र प्रथमपरिशिष्टम्।

## अकारादिक्रमेण शिवसूत्राणां सूची।

| | उ. | सू.सं. | पृ. |
|---|---|---|---|
| अभिलाषाद्बहिर्गतिः संवाह्यस्य | ३ | ४० | १३१ |
| अविवेको मायासौषुप्तम् | १ | १० | २४ |
| आत्मा चित्तम् | ३ | १ | ७३ |
| आसनस्थः सुखं ह्रदे निमज्जति | ३ | १६ | ९४ |
| इच्छा शक्तिरुमा कुमारी | १ | १३ | ३० |
| उद्यमो भैरवः | १ | ५ | १८ |
| कथा जपः | ३ | २७ | ११३ |
| करणशक्तिः स्वतोऽनुभवात् | ३ | ३७ | १२५ |
| कलादीनां तत्त्वानामविवेको माया | ३ | ३ | ७६ |
| कवर्गादिषु माहेश्वर्याद्याः पशुमातरः | ३ | १९ | १०० |
| गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः | २ | ४ | ५६ |
| गुरुरुपायः | २ | ६ | ५९ |
| चित्तं मन्त्रः | २ | १ | ४७ |
| चित्तस्थितिवच्छरीरकरणबाह्येषु | ३ | ३९ | १३० |
| चैतन्यमात्मा | १ | १ | ४ |
| जाग्रत्स्वप्न-सुषुप्तभेदे तुर्याभोगसंभवः | १ | ७ | २३ |
| जाग्रद्द्वितीयकरः | ३ | ८ | ८८ |
| ज्ञानं जाग्रत् | १ | ८ | २४ |

| | उ. | सू.सं. | पृ. |
|---|---|---|---|
| ज्ञानमन्नम् | २ | ९ | ६९ |
| ज्ञानं बन्धः | १ | २ | ११ |
| ज्ञानं वन्धः | ३ | २ | ७४ |
| ज्ञानाधिष्ठानं मातृका | १ | ४ | १६ |
| तत्प्रवृत्तावपि अनिरासः संवेत्तृभावात् | ३ | ३२ | १२० |
| तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः | ३ | ४१ | १३३ |
| तद्विमुक्तस्तु केवली | ३ | ३४ | १२२ |
| त्रितयभोक्ता वीरेशः | १ | ११ | २६ |
| त्रिपदाद्यनुप्राणनम् | ३ | ३८ | १२६ |
| त्रिषु चतुर्थं तैलवदासेच्यम् | ३ | २० | १०३ |
| दानमात्मज्ञानम् | ३ | २८ | ११४ |
| दृश्यं शरीरम् | १ | १४ | ३२ |
| धीवशात् सत्त्वसिद्धिः | ३ | १२ | ९१ |
| नर्तक आत्मा | ३ | ९ | ८९ |
| नाडीसंहार-भूतजय-भूतकैवल्य-भूतपृथक्त्वानि | ३ | ५ | ८० |
| नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्य-सौषुम्नेषु | ३ | ४४ | १३९ |
| नैसर्गिकः प्राणसंबन्धः | ३ | ४३ | १३६ |
| प्रयत्नः साधकः | २ | २ | ४८ |
| प्राणसमाचारे समदर्शनम् | ३ | २२ | १०६ |
| प्रेक्षकाणीन्द्रियाणि | ३ | ११ | ९१ |
| बीजावधानम् | ३ | १५ | ९४ |
| भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः | ३ | ४२ | १३४ |
| भूतसंधान-भूतपृथक्त्व-विश्वसंघट्टाः | १ | २० | ४० |

| | उ. | सू.सं. | पृ. |
|---|---|---|---|
| भूयः स्यात् प्रतिमीलनम् | ३ | ४५ | १४० |
| भेदतिरस्कारे सर्गान्तरकर्मत्वम् | ३ | ३६ | १२४ |
| मग्नः स्वचित्तेन प्रविशेत् | ३ | २१ | १०४ |
| मध्येऽवरप्रसवः | ३ | २३ | १०७ |
| महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः | १ | २२ | ४४ |
| मातृकाचक्रसंवोधः | २ | ७ | ६० |
| मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् | ३ | २४ | १०८ |
| मोहजयादनन्ताभोगात् सहजविद्याजयः | ३ | ७ | ८६ |
| मोहप्रतिसंहतस्तु कर्मात्मा | ३ | ३५ | १२३ |
| मोहावरणात् सिद्धिः | ३ | ६ | ८३ |
| यथा तत्र तथान्यत्र | ३ | १४ | ९३ |
| योनिवर्गः कलाशरीरम् | १ | ३ | १३ |
| योऽविपस्थो ज्ञाहेतुश्च | ३ | २९ | ११५ |
| रङ्गोऽन्तरात्मा | ३ | १० | ९० |
| लोकानन्दः समाधिसुखम् | १ | १८ | ३७ |
| वितर्क आत्मज्ञानम् | १ | १७ | ३६ |
| विद्याऽविनाशे जन्मविनाशः | ३ | १८ | ९९ |
| विद्याशरीरसत्ता मन्त्ररहस्यम् | २ | ३ | ५० |
| विद्यासंहारे तदुत्थस्वप्नदर्शनम् | २ | १० | ७० |
| विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था | २ | ५ | ५७ |
| विस्मयो योगभूमिकाः | १ | १२ | २९ |
| शक्तिचक्रसंधाने विश्वसंहारः | १ | ६ | २० |
| शक्तिसंधाने शरीरोत्पत्तिः | १ | १९ | ३८ |
| शरीरं हविः | २ | ८ | ६८ |

| | उ. | सू.सं. | पृ. |
|---|---|---|---|
| शरीरवृत्तिर्व्रतम् | ३ | २६ | १११ |
| शरीरे संहारः कलानाम् | ३ | ४ | ७८ |
| शिवतुल्यो जायते | ३ | २५ | ११० |
| शुद्धतत्त्वसंधानाद्वाऽपशुशक्तिः | १ | १६ | ३५ |
| शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः | १ | २१ | ४२ |
| सिद्धः स्वतन्त्रभावः | ३ | १३ | ९२ |
| सुखदुःखयोर्बहिर्मननम् | ३ | ३३ | १२१ |
| स्थितिलयौ | ३ | ३१ | ११८ |
| स्वमात्रानिर्माणमापादयति | ३ | १७ | ९७ |
| स्वप्नो विकल्पाः | १ | ९ | २४ |
| स्वशक्तिप्रचयोऽस्य विश्वम् | ३ | ३० | ११७ |
| हृदये चित्तसंघट्टाद् दृश्यस्वापदर्शनम् | १ | १५ | ३३ |



**इति शिवसूत्रविमर्शिनीस्थसूत्राणामकारादिक्रमसूची समाप्ता ॥**

---

अथ

## द्वितीयपरिशिष्टम् ।

# शिवसूत्रविमर्शिन्यां संवादितप्रमाण-वाक्यानामकाराद्यनुक्रमणिका ।


| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| अकिंचिच्चिन्तकस्यैव (२अधि०२३श्लो०) | १९ | मालिनीविजयः |
| अगाधसंशयाम्भोधि (३नि०२०का०) | ५९ | स्पन्दः |
| अज्ञानाद्बध्यते लोकः | ११ | सर्वाचारः |
| अत एव यथाभीष्ट (१अ०६आ०१०का०) | १२५ | प्रत्यभिज्ञा |
| अतः सततमुद्युक्तः (१नि० २१ का०) | ७२ | स्पन्दः |
| अतिक्रुद्धः प्रहृष्टो वा (१नि०२२का०) | १२९ | स्पन्दः |
| अतो विन्दुरतो नादः (३नि०२०का० ) | ५७ | स्पन्दः |
| अत्रैकतमयुक्तिस्थे ( १४८ श्लो० ) | ७० | विज्ञानभैरवः |
| अन्तः स्वानुभवानन्द (१५शात् सार्ध१६शान्तं) | १२७ | विज्ञानभैरवः |
| अन्यथा तु स्वतन्त्रा स्यात् (३नि०३का०) | ७१ | स्पन्दः |
| अपसव्येन रेच्येत (७ प० २९१ तमात् २९३ तमान्तम्) | ८० | स्वच्छन्दः |
| अप्रबुद्धधियस्त्वेते (१ नि० २० का०) | ७७ | स्पन्दः |
| अबुद्धं बुद्धमेव च (२ अ० ४३ श्लो०) | २६ | पूर्वशास्त्रम् ( मालिनीविजयः ) |
| अभिलाषो मलोऽत्र तु (४प०१०४श्लोकोत्त०) | १३१ | स्वच्छन्दः |
| अयमेवात्मनो ग्रहः (२नि०७कारिकोत्तरा०) | ३६ | स्पन्दः |
| अयमेवोदयस्तस्य (२नि० ६ का०) | ५० | स्पन्दः |

| प्रमाणप्रती० | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| अवस्थायुगलं चात्र (१ नि० १४ का०) | १२० | स्पन्दः |
| अव्यक्तलिङ्गिनं दृष्ट्वा | ११२ | कुलपञ्चाशिका |
| अस्ति-नास्तिविभागेन | ११९ | कालिकाक्रमः |
| अहमेव परो हंसः (४ प० ३९५ श्लो०) | ११३ | स्वच्छन्दः |
| अहो तत्त्वस्य माहात्म्यं | १३६ | कुलसारः |
| आत्मतत्वं ततस्त्यक्त्वा (४ प० ३८९ तमात् सार्ध ३९२ तमान्तम् ) | ८७ | स्वच्छन्दः |
| आत्मनो भैरवं रूपं (२ प० १३७ श्लो०) | २० | स्वच्छन्दः |
| आत्मा चैवात्मना ज्ञातो | ३० | कुलयुक्तिः |
| आत्मानमत एवायं(१अ०५आ०१५का०) | ९८ | प्रत्यभिज्ञा |
| आमिषं तु यथा स्वस्थः | ४९ | तन्त्रसद्भावः |
| इति वा यस्य संवित्तिः (२नि०५का०) | ३६-९८ | स्पन्दः |
| इयमेवामृतप्राप्तिः (२ नि० ७ का०) | ३८ | स्पन्दः |
| उच्चारकरणध्यान (२ अ० २१ श्लो०) | ७९ | पूर्वशास्त्रम् (मालिनीवि०) |
| उच्चाररहितं वस्तु (२ अ० २२ श्लो०) | २२-७२ | मालिनीविजयः |
| उच्चार्यमाणा ये मन्त्रा (१६-१७ श्योः उत्तरपूर्वार्धात्म) | ४८ | सर्वज्ञानोत्तरम् |
| उत्सृज्य लौकिकाचारं | १०७ | आनन्दभैरवः |
| उद्बोधितो यथा वह्निः (१० प० ३६८-३६९ श्लो०) | १४० | स्वच्छन्दः |
| उन्मनापरतो देवि (४ प० ३२९श्लो०) | १४० | स्वच्छन्दः |
| एकं सृष्टिमयं बीजं | ५८ | कुलचूडामणिः |
| एकचिन्ताप्रसक्तस्य (३नि०९का०) | २० | स्पन्दः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| करन्ध्रचितिमध्यस्था | १७-१०२ | तिमिरोद्धाटः |
| कलोद्वलितचैतन्यं | ७७ | तन्त्रसद्भावः |
| कश्चिद्धीरः प्रत्यगा (२ अ० ४ व० १ म०) | ९१ | कठोपनिषत् |
| कायोन्मुखः प्रयत्नो यः ( १ नि० २ यात् ३ यकारिकान्तम्) | १२१ | स्पन्दः |
| कालाग्निना कालपदा (५२ श्लो०) | ७९ | विज्ञानभैरवः |
| गुरोर्गुरुतरा शक्तिः | ६० | त्रिशिरोभैरवः |
| ग्राहकभूमिकोत्तीर्णा० | १३९ | प्रत्यभिज्ञासूत्र-विमर्शिनी |
| ग्राह्यग्राहकसंवित्तिः (१०६ श्लो०) | ३७-१३९ | विज्ञानभैरवः |
| ग्लानिर्विलुण्ठिका देहे (३नि०८का०) | ४१ | स्पन्दः |
| चक्षुषा यच्च संधानं (१२ प० १६०-१६१ श्लो०) | १०८ | स्वच्छन्दः |
| चिद्धर्मा सर्वदेहेषु (१०० श्लो०) | ८ | विज्ञानभैरवः |
| चैतन्यमेक एवात्मा | ६ | ········(?) |
| जलं हिमं च यो वेद | ९८ | आगमः |
| जलस्येवोर्मयो वह्नेः (११० श्लो०) | ३३ | विज्ञानभैरवः |
| जागरादिविभेदेऽपि (१ नि० ३ का०) | २४ | स्पन्दः |
| ज्ञानं प्रकाशकं लोके (१३७ श्लो०) | ७६ | विज्ञानभैरवः |
| ततः प्रवर्तते शक्तिः (७अ०३६श्लो०) | ३९ | मृत्युजिद्भट्टारकः |
| तत्तद्रूपतया ज्ञानं | ११८ | कालिकाक्रमः |
| तत्त्वत्रयविनिर्मुक्तं ( ८ अ० २६ उत्तरार्ध २७ पूर्वार्धात्म) | १०० | मृत्युजित् |
| तथा स्वप्नेऽप्यभीष्टार्थान् (३ नि० २ का०) | ४० | स्पन्दः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| तथा स्वात्मन्यधिष्ठाना (३ नि० ७ का० उत्तरार्धम्) | ३५ | स्पन्दः |
| तदाक्रम्य बलं मन्त्राः (२ नि० १ का०) | ४५-५५ | स्पन्दः |
| तदेव भवति स्थूलं (४ प० २९३ श्लो०) | ९७ | स्वच्छन्दः |
| तद्ग्रहो मन्त्रसद्भावः | ४९ | ........(?) |
| तन्मात्रोदयरूपेण (३ नि० १७-१८ का०) | ७४ | स्पन्दः |
| तमधिष्ठातृभावेन (१ नि० ११ का०) | ३० | स्पन्दः |
| तस्मात् सा तु परा विद्या (४ प० ३९१ श्लो०) | ४२ | स्वच्छन्दः |
| तस्मान्न तेषु संसक्ति | ७२ | पूर्वशास्त्रम् (मालिनीवि०) |
| तस्मान्नित्यमसंदिग्धं | १११ | कालिकाक्रमः |
| तस्य देवातिदेवस्य | ११३-१३९ | कालिकाक्र० |
| तस्योपलब्धिः सततं (१ नि० १७ का०) | २८ | स्पन्दः |
| ते समाधावुपसर्गा (३ पाद ३७ सू०) | ५६ | पातञ्जलम् |
| त्रिगुणेन तु जप्तेन (६ प० ५४ श्लो०) | १२४ | स्वच्छन्दः |
| त्रिषु धामसु यद्भोग्यं | २७ | ........(?) |
| त्वमेकांशेनान्तरात्मा | ८९ | नैश्वासतन्त्रम् |
| दर्शनात् स्पर्शनाद्वापि | ११५ | ........(?) |
| दिदृक्षयेव सर्वार्थान् (३ नि० ११ का०) | ४३ | स्पन्दः |
| दीक्षासिद्धौ तु ये प्रोक्ताः | ३५ | लक्ष्मीकौलार्णवः |
| दुर्बलोऽपि तदाक्रम्य (३ नि० ६ का०) | ४१ | स्पन्दः |
| देहोत्थिताभिर्मुद्राभि | ११२ | त्रिकसारः |
| धर्माधर्मात्मकं कर्म (१ अ० २४ श्लो०) | १५ | मालिनीविजयः |
| न चैतदप्रसन्नेन | ७१ | मालिनीविजयः |
| न जानन्ति गुरुं देवं | ५१ | तन्त्रसद्भावः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| न दुःखं न सुखं यत्र (१ नि० ५ का०) | १२२ | स्पन्दः |
| न विद्या मातृकापरा (१प० १९७ श्लो०) | ६३ | स्वच्छन्दः |
| न संधानं विना दीक्षा | ३९ | लक्ष्मीकौलार्णवः |
| नहीच्छानोदनस्यायं (१ नि० ८ का०) | ३२ | स्पन्दः |
| नाभ्यां हृदयसंचारात् (७ प० २९४ श्लो०) | ८२ | स्वच्छन्दः |
| नाशेऽविद्याप्रपञ्चस्य | १२० | कालिकाक्रमः |
| निजाशुद्ध्यासमर्थस्य (१ नि० ९ का०) | १२ | स्पन्दः |
| निमेषोन्मेषमात्रं तु (८ अ० ८ श्लो०) | १३५ | मृत्युजित् |
| निरस्य सदसद्वृत्तीः | १३३ | कालिकाक्रमः |
| नोर्ध्वे ध्यानं प्रयुञ्जीत (८ अ० ३९ शत्तमात् ४४ शत्तमान्तम्) | ९५ | मृत्युजिद्भट्टारकः |
| परमात्मस्वरूपं तु (८ अ० २८ श्लो०) | ७ | मृत्युजिद्भट्टारकः |
| परामृतरसापायः (३ नि० १४ का०) | १३ | स्पन्दः |
| पाशावलोकनं त्यक्त्वा (४प०४२९श्लो०) | ८७ | स्वच्छन्दः |
| पुर्यष्टकसमावेशात् (११ प० ८६ श्लो०) | ९१ | स्वच्छन्दः |
| पृथङ्मन्त्राः पृथङ्मन्त्री | ४८ | श्रीकण्ठीयसंहिता |
| प्रकाशस्यात्मविश्रान्तिः (२२ उत्तरा०२३) | ६३ | अजडप्रमातृसिद्धिः |
| प्रबुद्धः सर्वदा तिष्ठेत् (३ नि० १२ का०) | ७० | स्पन्दः |
| प्रसह्य चञ्चलीत्येव (४ प० ३०८ तमात् ३११ तमान्तम्) | १०९ | स्वच्छन्दः |
| प्राक्संवित्प्राणे परिणता | १३८ | तत्त्वार्थचिन्तामणिः |
| प्राणः प्राणमयः प्राणः (७ प० २५ श्लो०) | १३७ | स्वच्छन्दः |
| प्राणादिस्थूलभावं तु (८ अ० १२ श्लो०) | १०४ | मृत्युजिद्भट्टारकः |
| वद्धा पद्मासनं योगी | ५८ | तन्त्रसद्भावः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| बुद्धिप्राणप्रसरेऽपि | १०७ | प्रत्यभिज्ञाटीका |
| ब्रह्म-विष्ण्विन्द्रदेवानां (६ प० ५४-५५ पूर्वार्ध०) | १२५ | स्वच्छन्दः |
| भित्त्वा क्रमेण सर्वाणि(७प०३२४-३२५श्लो०) | ८२ | स्वच्छन्दः |
| भिन्नवेद्यप्रथात्रैव (३ अ० २ आ० ५ का०) | १६ | प्रत्यभिज्ञा |
| भुवनाध्वादिरूपेण (५६ श्लो०) | ७९ | विज्ञानभैरवः |
| भूयो भूयः परे भावे (१४५ श्लो०) | ११३ | विज्ञानभैरवः |
| भोक्तैव भोग्यभावेन (३नि० २ का०उ०) | ३३ | स्पन्दः |
| मध्यमं प्राणमाश्रित्य (८ अ० ११ शात् १८ शपर्यन्तम्) | ८४ | मृत्युजिद्भट्टारकः |
| मन्त्राणां जीवभूता तु | ४८ | तन्त्रसद्भावः |
| मलप्रध्वस्तचैतन्यं (२ प० ३८ शत्तमात् ४० शत्तमान्तम्) | १५ | स्वच्छन्दः |
| मलमज्ञानमिच्छन्ति (१ अ० २३ श्लो०उ०) | ११ | मालिनीविजयः |
| महाशून्यालये वह्नौ (१४९ श्लो०) | ६८ | विज्ञानभैरवः |
| मानसं चेतना शक्तिः (१३८श्लो०) | १०५ | विज्ञानभट्टारकः |
| मृत्युं च कालं च कला | २१-६९ | भर्गशिखा |
| यः प्रियो यः सुहृद्बन्धु | ६८ | तिमिरोद्घाटः |
| यतः करणवर्गोऽयं (१ नि० ६ का०) | ८ | स्पन्दः |
| यतो ज्ञानमयो देवः (९ अ० १० श्लो०) | ११७ | मृत्युजित् |
| यत्र यत्राक्षमार्गेण (११७ श्लो०) | ८८ | विज्ञानभैरवः |
| यत्र सर्वे लयं यान्ति | २२ | वीरावलिः |
| यत्र स्थितमिदं सर्वं (१नि० २ का०) | १० | स्पन्दः |
| यथा स्वप्नानुभूतार्थान् | १३३ | कालिकाक्रमः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| यथा ह्यर्थोऽस्फुटो दृष्टः (३ नि० ४-५ का०) | ४१ | स्पन्दः |
| यथेच्छाभ्यर्थितो धाता (३ नि० १ का०) | ४० | स्पन्दः |
| यथेन्दुः पुष्पसंकाशः | २३ | चन्द्रज्ञानम् |
| यदविद्यावृततया | १२३-१३२ | कालिकाक्रमः |
| यदा क्षोभः प्रलीयेत (१नि०९का०उ०) | ५९-६९ | स्पन्दः |
| यदा गुरुवरः सम्यक् | १३५ | कुलरत्नमाला |
| यदा तु तेपि सुव्यक्त | १२६ | तत्त्वगर्भः |
| यदा त्वेकत्र संरूढः (३ नि० १९ का०) | २३ | स्पन्दः |
| यस्मात् सर्वमयो जीवः (३ नि० ३ का०) | ९ | स्पन्दः |
| यस्य ज्ञेयमयो भावः (४ प० ३०९-३१०) | १०९ | स्वच्छन्दः |
| यस्योन्मेषनिमेषाभ्यां (१ नि० १ का०) | २३ | स्पन्दः |
| यावन्न वेदका एते | ८ | उच्छुष्मभैरवः |
| या सा तु मातृका देवि | ५१ | तन्त्रसद्भावः |
| या सा शक्तिः परा सूक्ष्मा | ५२ | तन्त्रसद्भावः |
| या सा शक्तिः परा सूक्ष्मा | १३६ | वाजसनेया |
| या सा शक्तिर्जगद्धातुः (३ अ० ५ मात् १३ शान्तम्) | ४४-१०० | मालिनीविजयः |
| योगी स्वच्छन्दयोगेन (७ प० २५७-२५८ श्लो०) | २८ | स्वच्छन्दः |
| लभते तत्प्रयत्नेन (१ नि० ७ का०) | ९३ | स्पन्दः |
| वायवी धारणाङ्गुष्ठे (७ प० २९६-२९७ श्लो० पू०) | ८१ | स्वच्छन्दः |
| वासनामात्रलाभेऽपि | ७१-१०८ | मालिनीविजयः |
| विषयेषु च सर्वेषु (४ प० ३११श्लो०) | ११० | स्वच्छन्दः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| विसृष्टाशेषसद्बीज (५९ श्लो०) | ८९ | भट्टनारायणः (स्तवचिन्तामणिः) |
| विहाय सकलाः क्रिया | १०५ | ज्ञानगर्भस्तोत्रम् |
| वेदनानादिधर्मस्य (४ प० ३९२ श्लो० १ पादः) | ८६ | स्वच्छन्दः |
| व्यापारं मानसं त्यक्त्वा(४प०४३२श्लो०) | १०५ | स्वच्छन्दः |
| शक्तयोऽस्य जगत् कृत्स्नं | ११७ | सर्वमङ्गला |
| शक्तिचक्रं तदेवोक्तं | ६० | मालिनीविजयः |
| शक्तिश्च शक्तिमांश्चैव | ८९ | सर्वमङ्गला |
| शक्तिसंगमसंक्षुब्ध (६९ तितमात् ७३ तितमान्तम्) | १२८ | विज्ञानभैरवः |
| शब्दराशिसमुत्थस्य (३ नि०१३ श्लो०) | १८ | स्पन्दः |
| श्रयेत्स्वातन्त्र्यशक्तिं स्वां | ९२ | ........(?) (श्रीनाथपादकृत) |
| षट्शतानि दिवा रात्रौ (१५६ श्लो०) | ११४ | विज्ञानभैरवः |
| संसारनाट्यप्रवर्तयिता | ९० | प्रत्यभिज्ञाटीका |
| सकारेण बहिर्याति (नेदं मूलपुस्तके लभ्यते) | ११४ | विज्ञानभैरवः(?) |
| स गुरुर्मत्समः प्रोक्त (२ अ० १० श्लो० उ०) | ५९ | मालिनीविजयः |
| स च सर्वेषु भूतेषु (४ प० ३०७-३०८ श्लो० पू०) | ३४ | स्वच्छन्दः |
| सत्त्वस्थो राजसस्थश्च | ७४ | तन्त्रसद्भावः |
| सप्रपञ्चं परित्यज्य | ९९ | श्रीकण्ठी |
| समनान्तं वरारोहे (४ प० ४२७ तमात् ४३१ तमान्तम्) | ८६ | स्वच्छन्दः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| सर्वं शुद्धं निरालम्बं | ११९ | कालिकाक्रमः |
| सर्वं जगत्स्वदेहं वा (६५ श्लो०) | ३७-१३० | विज्ञानभैरवः |
| सर्वज्ञः सर्वकर्ता च (१०९ श्लो०) | ३६ | विज्ञानभैरवः |
| सर्वतत्त्वानि भूतानि (७ प० २४२ श्लो०) | ९३ | स्वच्छन्दः |
| सर्वं देहं चिन्मयं हि (६३ श्लो०) | ३६ | विज्ञानभैरवः |
| सर्वाणीन्द्रियकर्माणि (४ अ० २७ श्लो०) | ६९ | भगवद्गीता |
| सर्वे वर्णात्मका मन्त्रा | ५१ | तन्त्रसद्भावः |
| सहाराधकचित्तेन (१ नि० २ का०) | ४८ | स्पन्दः |
| सात्र कुण्डलिनी बीज | ६५ | सिद्धामृतम् |
| सा देवी सर्वदेवीनां ( १० प० ७२३-७२४ श्लो० पू०) | ३१ | स्वच्छन्दः |
| सा ममेच्छा परा शक्तिः (१ अ० २५-२६ श्लो० पू०) | ३१ | मृत्युञ्जयभट्टारकः |
| सा योनिः सर्वदेवानां (७ अ० ४० श्लो०) | ३९-९४ | मृत्युञ्जयभट्टारकः |
| सुखदुःखादिविज्ञान | १२३ | कालिकाक्रमः |
| सुप्रदीप्ते यथा वह्नौ (४ प० ३९४ श्लो०) | ११२ | स्वच्छन्दः |
| सेयं क्रियात्मिका शक्तिः ( ३नि० १६ का०) | ६७ | स्पन्दः |
| स्वच्छन्दश्चैव स्वच्छन्दः (७ प० २५८ श्लो० उ०) | ९३ | स्वच्छन्दः |
| स्वनिर्वाणं परं शुद्धं (४ प० २३८ श्लो०) | ९९ | स्वच्छन्दः |
| स्वपदा स्वशिरश्छायां | ९ | त्रिकहृदयम् |
| स्वयंभूर्भगवान् देवो | ८३ | लक्ष्मीकौलार्णवः |

| प्रमाणप्रतीकं | पृष्ठाङ्कः | ग्रन्थाङ्कः |
|---|---|---|
| स्वरूपावरणे चास्य (३ नि० १५ श्लो०) | १८ | स्पन्दः |
| स्वातन्त्र्यहानिर्बोधस्य (३अ०२आ०४का०) | १३ | प्रत्यभिज्ञा |
| हकारस्तु स्मृतः प्राणः(४प०२५५श्लो०उ०) | १३८ | स्वच्छन्दः |
| हृद्याकाशे निलीनाक्षः (४९ श्लो०) | ३४ | विज्ञानभैरवः |


इति शिवसूत्रविमर्शिन्यां प्रमाणवाक्यानुक्रमणिका संपूर्णा ॥

# अथ तृतीयपरिशिष्टम् ।

## शिवसूत्रविमर्शिन्यां प्रामाणिकग्रन्थ-तत्प्रमाणानां यथाक्रमं समुच्चयनम् ।

[ अस्मिन् ३ ये परिशिष्टे टिप्पन्यां 'मू० पा०' इति प्रतीकोत्तरं मूलतत्तत्पुस्तके वर्तमानपाठभेदोपन्यासः संज्ञातव्यः ]


**अजडप्रमातृसिद्धौ ।**

प्रकाशस्यात्मविश्रान्ति (२२ श्लो० उ० २३) ६३

**आगमे ।**

जलं हिमं च यो वेद ९८

**आनन्दभैरवे ।**

उत्सृज्य लौकिकाचार १०७

**उच्छुष्मभैरवे ।**

यावन्न वेदका एते ८

**कठोपनिषदि ।**

कश्चिद्धीरः प्रत्यगात्मान ( २ अ० ४ व० १ म० ) ९१

**कालिकाक्रमे ।**

अस्ति-नास्तिविभागेन ११९

तत्तद्रूपतया ज्ञानं ११८

तस्मान्नित्यमसंदिग्धं १११

तस्य देवातिदेवस्य ११३-१३९

नाशोऽविद्याप्रपञ्चस्य १२०

निरस्य सदसद्वृत्तीः १३३

यथा स्वप्नानुभूतार्थान् १३३

यदविद्यावृततया १२३

सर्वं शुद्धं निरालम्बं ११९

सुखदुःखादिविज्ञान १२३

**कुलचूडामणौ ।**

एकं सृष्टिमयं बीजं ५८

**कुलपञ्चाशिकायाम् ।**

अव्यक्तलिङ्गिनं दृष्ट्वा ११२

**कुलयुक्तौ ।**

आत्मा चैवात्मना ज्ञातो ३०

**कुलरत्नमालायाम् ।**

यदा गुरुवरः सम्यक् १३५

**कुलसारे ।**

अहो तत्त्वस्य माहात्म्यं १३६

**चन्द्रज्ञाने ।**

यथेन्दुः पुष्पसंकाशः २३

**ज्ञानगर्भस्तोत्रे ।**

विहाय सकलाः क्रिया १०५

**तत्त्वगर्भे ।**

यदा तु तेऽपि सुव्यक्त १२६

**तत्त्वार्थचिन्तामणौ ।**

प्राक् संवित्प्राणे परिणता १३८

**तन्त्रसद्भावे ।**

आमिषं तु यथा खस्थः ४९

कलोद्वलितचैतन्यं ७७

गतिमेत्यर्थभावेन ५८

न जानन्ति गुरुं देवं ५१

बद्ध्वा पद्मासनं योगी ५८

मन्त्राणां जीवभूता तु ४८
या सा तु मातृका देवि ५१
या सा शक्तिः परा सूक्ष्मा ५२
सत्त्वस्थो राजसस्थश्च ७४
सर्वे वर्णात्मका मन्त्रा ५१

**तिमिरोद्घाटे ।**

करन्ध्रचितिमध्यस्था १७-१०२
यः प्रियो यः सुहृद्बन्धु ६८

**त्रिकसारे ।**

देहोत्थिताभिर्मुद्राभि ११२

**त्रिकहृदये ।**

स्वपदा स्वशिरश्छायां ९

**त्रिशिरोभैरवे ।**

गुरोर्गुरुतरा शक्तिः ६०

**नैश्वासतन्त्रे ।**

त्वमेकांशेनान्तरात्मा ८९

**पातञ्जले ।**

ते समाधावुपसर्गा (३पा० ३७ सू०) ५६

**प्रत्यभिज्ञाटीकायाम् ।**

बुद्धिप्राणप्रसरेऽपि १०७
संसारनाट्यप्रवर्तयिता ९०

**प्रत्यभिज्ञायाम् ।**

अत एव यथाभीष्ट (१ अ० ६ आ० १० का०) १२५
आत्मानमत एवायं (१ अ० ५ आ० १५ का०) ९८
भिन्नवेद्यप्रथात्रैव (३ अ० २ आ० ५ का०) १६

स्वातन्त्र्यहानिर्बोधस्य (३ अ० २ आ० ४ का०) १३

**प्रत्यभिज्ञासूत्रविमर्शिन्याम् ।**

ग्राहकभूमिकोत्तीर्णानां १२२

**भगवद्गीतासु ।**

सर्वाणीन्द्रियकर्माणि (४ अ० २७ श्लो०) ६९

**भट्टनारायणस्तोत्रे** (स्तवचिन्तामणौ)।

विसृष्टाशेषसद्बीज (५९ श्लो०) (मू० पु० पाठभेदः) ८९

**भर्गशिखायाम् ।**

मृत्युं च कालं च कला २१

**मालिनीविजये ।**

अकिंचिच्चिन्तकस्यैव (२ अ० २३ श्लो०) १९

अबुद्धं बुद्धमेव च (पूर्वशास्त्रे २ अ० ४३ श्लो०) २६

उच्चारकरणध्यान (पूर्वशा० २ अ० २१ श्लो०) ७९

उच्चाररहितं वस्तु (२ अ० २२ श्लो०) २२-७२

तस्मान्न तेषु संसक्तिं (पूर्वशा० ) ७२

धर्माधर्मात्मकं कर्म (१ अ० २४ श्लो०) १५

न चैतदप्रसन्नेन ७१

मलमज्ञानमिच्छन्ति (१ अ० २३ श्लो०) ११

या सा शक्तिर्जगद्धातुः (३ अ० ५ मात् १३ शान्तम्)
(मू० पु० पाठभेदः) ४४-१००

---

(१) मू० पा० विसृष्टानेकसद्बीज०

(२) मू० पा० एवमेषा द्विरूपापि················ ।
अर्थोपाधिवशाद्याति····················· ॥
तत्र तावत्समापन्ना मातृभावं विभिद्यते ।
······························ ॥

वासनामात्रलाभेऽपि ७१-१०८
शक्तिचक्रं तदेवोक्तं ६०
स गुरुर्मत्समः प्रोक्तः (२ अ० १० श्लो०) ५९
मृत्युजिद्भट्टारके ।
ततः[3] प्रवर्तते शक्तिः (७ अ० ३६ श्लो०) (मू० पु० पाठभेदः) ३९
तत्त्वत्रयविनिर्मुक्तं (८ अ० २६ श्लो० उ० २७ पू०) १००
निमेषोन्मेषमात्रं[4] तु (८ अ० ८ श्लो० उ० ९ पू०) (मू० पु० पाठभेदः) १३५

---

··················द्विधा बीजं स्वनामतः ।
································ ॥
पृथग्वर्णविभेदेन शतार्धकिरणोज्ज्वला ।
································ ॥
वाचकत्वेन सर्वापि शंभोः शक्तिश्च शस्यते ।
वर्गाष्टकमिह ज्ञेयमघोराद्यमनुक्रमात् ॥
तदेव शक्तिभेदेन माहेश्वर्यादि चाष्टकम् ।
माहेशी ब्राह्मणी चैव कौमारी वैष्णवी तथा ॥
ऐन्द्री याम्या च चामुण्डा योगेशी चेति ता मताः ।
शतार्धभेदभिन्नानां तत्संख्यानां वरानने ॥
रुद्राणां वाचकत्वेन कल्पिताः परमेष्ठिना ।

(३) मू० पा० ततः प्रवर्तते·················· ।
इच्छामात्रविनिर्दिष्टा·················· ॥
सा योनिः························ ।
··················तस्याः सर्वे प्रवर्तते ॥ (९४ पृ० च)

(४) मू० पा० निमेषोन्मेषमात्रेण यदि चैवोपलभ्यते ।
ततः प्रभृति मुक्तोऽसौ·················· ॥

नोर्ध्वे ध्यानं प्रयुञ्जीत (८ अ० ४० शत्तमात् ४४ शान्तं)
(मू० पु० पाठभेदः) ९५
परमात्मस्वरूपं तु (८ अ० २८ श्लो०) ७
प्राणादिस्थूलभावं तु (८ अ० १२ श्लो०) १०५
मध्यमं प्राणमाश्रित्य (८ अ० ११ शात् १८ शान्तम्)
(मू० पु० पाठभेदः) ८४

---

(५) मू० पा० नोर्ध्वे………………………… ।
………………………किंचित्पार्श्वयोरुभयोरपि ॥
………………संस्थाने………………………… ।
…………………………………………… ॥
न चाक्ष्णोर्मीलनं किंचिन्न………………… ।
………………………………न च भावयेत् ॥
…………………………शब्दस्पर्शरसादि यत् ।
सर्वं त्यक्त्वा………………केवलं तन्मयो भवेत् ॥
…………………………परस्य परमात्मनः ।
………………………………………… ॥

(६) मू० पा० मध्यमं………………………… ।
…………………………………………… ॥ ११ ॥
…………………………………………… ।
…………………………………………… ॥ १२ ॥
………स उद्दिष्टो………………………… ।
……………………………………………… ॥ १३ ॥
……प्रविशेद्धाम परमं…………………… ।
…………………………………निकृन्तकः ॥ १४ ॥
…………………………………चाव्ययं विभुम् ।
……………………………………………… ॥ १५ ॥

यतो ज्ञानमयो देवः (९ अ० १० श्लो०)　　　　११७
साँ ममेच्छा परा शक्तिः (१ अ० २५ श्लो० २६ उ०)
(मू० पु० पाठभेदः)　　　　३१
साँ योनिः सर्वदेवानां (७ अ० ४० उ० ४१ पू०)
(मूलपु० पाठभेदः)　　　　३९-९४
**लक्ष्मीकौलार्णवे ।**
दीक्षासिद्धौ तु ये प्रोक्ता　　　　३५
न संधानं विना दीक्षा　　　　३९
स्वयंभूर्भगवान्देवो　　　　८३
**वाजसनेयायाम् ।**
या सा शक्तिः परा सूक्ष्मा　　　　१३६
**विज्ञानभैरवे ।**
अत्रैकतमयुक्तिस्थे (१४८ श्लो०) (मूलपु० पाठभेदः)　　　　७०

---

.............................................. ।
..........................भवबन्धविनाशिनी ॥ १६ ॥
समं सर्वेषु भूतेषु ह्याधानं चित्तनिग्रहः ।
समाधानमिति प्रोक्तमन्यथा लोकदाम्भिकम् ॥ १७ ॥
.............................................. ।
.............................................. ॥ १८ ॥

(७) मू० पा० सा ममेच्छा............शक्तियुक्ता स्वभावजा ।
.............................................. ॥
..........................स्वा शक्तिः............ ।

(८) मू० पा० सा योनिः.............................. ।
..............................तस्याः सर्वं......... ॥

(९) मू० पा० अत्रैकतम.............................. ।
भरिताकारता सात्र.............................. ॥

अन्तःस्वानुभवानन्दा (१५ श्लो०) १२७
काल[10]ग्निना कालपदात् (५२ श्लो०) मू० पाठभेदः) ७९
ग्राह्य[11]ग्राहकसंवित्तिः (१०६ श्लो०) मू० पाठभेदः) ३७-१३९
चिद्धर्मा सर्वदेहेषु (१०० श्लो०) ८
जल[12]स्येवोर्मयो वह्नेः (११० श्लो०) मू० पु० पाठभेदः) ३३
ज्ञा[13]नं प्रकाशकं लोके (१३७ श्लो०) मूलपु० पाठभेदः) ७६
भुवनाध्वादिरूपेण (५६ श्लो०) ७९
भूयो भूयः परे भावे (१४५ श्लो०) ११३
महाशून्यालये वह्नौ (१४९ श्लो०) ६८
मानसं चेतना शक्तिः (१३८ श्लो०) १०५
यत्र यत्राक्षमार्गेण (११७ श्लो०) ८८
शक्ति[14]संगमसंक्षुब्ध (६९ श्लो०) मूलपु० पाठभेदः) १२८

---

(१०) मू० पा० ································ ।
························· शान्ताभासस्तदा भवेत् ॥

(११) मू० पा० ································ ।
योगिनां तु विशेषोऽस्ति ························ ॥

(१२) मू० पा० जलस्येवो ························ ।
························ विश्वभङ्गयो विभेदिताः ॥

(१३) मू० पा० ज्ञानप्रकाशकं सर्वं सर्वेणात्मा प्रकाशकः
एकमेकस्वभावत्वाज्ज्ञानं ज्ञेयं विभाव्यते ॥

(१४) मू० पा० शक्तिसंगम ························ ।
························································ ॥
························································ ।
························································ ॥
························································ ।
························· तल्लयस्तन्मना भवेत् ॥ ७१ ॥

षट्शतानि दिवारात्रौ (१५६ श्लो०) मूलपु० पाठभेदः) ११४
सर्वज्ञः सर्वकर्ता च ( १०९ श्लो०) मूलपु० पाठभेदः ) ३६
सर्वं जगत्स्वदेहं वा ( ६५ श्लो० ) ३७-१३०
सर्वं देहं चिन्मयं हि ( ६३ श्लो०) मू० पु० पाठभेदः) ३६
हृद्याकाशे निलीनाक्षः ( ४९ श्लो० ) ३४

वीरावलौ ।

यत्र सर्वे लयं यान्ति २२

श्रीनाथपादाः ।

श्रयेत्स्वातन्त्र्यशक्तिं स्वां ९२

श्रीकण्ठीयसंहितायाम् ।

पृथङ्मन्त्राः पृथङ्मन्त्री ४८

सर्वज्ञानोत्तरे ।

उच्चार्यमाणा ये मन्त्रा ( १६ श्लो० उ० ) ४८

सर्वमङ्गलायाम् ।

शक्तयोऽस्य जगत्कृत्स्नम् ११७

---

.............................................. ।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत् ॥
.............................................. ।
................................................ ॥

(१५) मू० पा० षट्शतानि.................................. ।
जपो देव्याः समुद्दिष्टः प्राणस्यान्ते सुदुर्लभः ॥

(१६) मू० पा० सर्वज्ञः.................................. ।
..................................दार्ढ्याद्भवेच्छिवः ॥

(१७) मू० पा० सर्वं देहं.................................. ।
..................................परमोदयः ॥

शक्तिश्च शक्तिमांश्चैव ८९
सर्वाचारे ।
अज्ञानाद्बध्यते लोकः ११
सिद्धामृते ।
सात्र कुण्डलिनी बीज ६५
स्पन्दे ।
अगाधसंशयाम्भोधि ( ३ नि० २० का० ) ५९
अतः सततमुद्युक्तः ( १ नि० २१ का० ) ७२
अतिक्रुद्धः प्रहृष्टो वा ( १ नि० २२ का० ) १२९
अतो बिन्दुरतो नादो ( ३ नि० १० का० ) ५७
अन्यथा तु स्वतन्त्रा स्यात् ( ३ नि० ३ का० ) ७१
अप्रबुद्धधियस्त्वेते ( १ नि० २० का० ) ७७
अयमेवात्मनो ग्रहः ( २ नि० ७ का० ) ३६
अयमेवोदयस्तस्य ( २ नि० ६ का० ) ५०
अवस्थायुगलं चात्र ( १ नि० १४ का० ) १२०
इति वा यस्य संवित्तिः ( २ नि० ५ का० ) ३६-९८
इयमेवामृतप्राप्तिः ( २ नि० ७ का० ) ३८
एकचिन्ताप्रसक्तस्य ( ३ नि० ९ का० ) २०
कार्योन्मुखः प्रयत्नो यः ( १ नि० १५-१६ का० ) १२१
ग्लानिर्विलुण्ठिका देहे (३ नि० ८ का०) ४१
जॉगरादिविभेदेऽपि (१ नि० ३ का०) मूलपु० पाठभेदः) २४
तथा स्वप्नेप्यभीष्टार्थान् (३ नि० २ का०) ४०
तथा स्वात्मन्यधिष्ठानात् (३ नि० १ का०) ३५

---

(१८) मू० पा० जाग्रदादिविभेदेपि...................... ।

तदाक्रम्य वलं मन्त्रा (२ नि० १ का०) ४५
तन्मांत्रोदयरूपेण (३ नि० १७ का०) मू० पु० पाठभेदः) ७४
तमधिष्ठातृभावेन (१ नि० ११ का०) ३०
तस्योपलब्धिः सततं (१ नि० १७ का०) २८
दिदृक्षयेव सर्वार्थान् (३ नि० ११ का०) ४३
दुर्वलोऽपि तदाक्रम्य (३ नि० ६ का०) ४१
न दुःखं न सुखं यत्र (१ नि० ५ का०) १२२
नहीच्छानोदनस्यायं (१ नि० ८ का०) ३२
निजाशुद्ध्यासमर्थस्य (१ नि० ९ का०) १२
परामृतरसापायः (३ नि० १४ का०) १३
प्रवुद्धः सर्वदा तिष्ठेत् (३ नि० १२ का०) ७०
भोक्तैव भोग्यभावेन (३ नि० २ का०) ३३
यतः करणवर्गोऽयं (१ नि० ६ का०) ८
यत्र स्थितमिदं सर्वं (१ नि० २ का०) १०
यथा ह्यर्थोऽस्फुटो दृष्टः (३ नि० ४ का०) ४१
यथेच्छाभ्यर्थितो धाता (३ नि० १ का०) ४०
यदा क्षोभः प्रलीयेत (१ नि० ९ का०) ५९
यदा त्वेकत्र संरूढः (३ नि० १९ का०) २३
यस्मात्सर्वमयो जीवः (२ नि० ३ का०) ९
यस्योन्मेषनिमेषाभ्यां (१ नि० १ का०) २३
लभते तत्प्रयत्नेन (१ नि० ७ का०) ९३
शव्दराशिसमुत्थस्य (३ नि० १३ का० ) ८
सहाराधकचितेन (२ नि० २ का०) ४८

(१९) मू० पा० तन्मात्रोद.................................. ।
..............................संसरत्यतः ॥ ( ७५ पृ० च)

सेयं क्रियात्मिका शक्तिः (३ नि० १६ का०) ६७
स्वरूपावरणे चास्य (३ नि० १५ का०) १८
स्वच्छन्दे ।
अपसैंव्येन रेच्येत । (७ प० २९१-२९२-२९३)
(मूलपु० पाठभेदः) ८०
अभिलाषो मलोऽत्र तु (४ प० १०४ श्लो०) १३१
अहमेव परो हंसः (४ प० ३९५ श्लो०) ११३
आत्मतत्त्वं[२१] ततस्त्यक्त्वा (४ प० ३८९ तितमात् ३९३
पूर्वार्धान्तं) मू० पाठभेदः) ८७
आत्मनो[२२] भैरवं रूपं (२ प० १३७ श्लो०) मू० पाठभेदः २०

---

(२०) मू० पा० अपसव्येन पूर्येत सव्येनैव विरेचयेत् ।
················चैतत् मोक्षमार्गेप[द]थस्य च ॥
······························प्राणायामस्त्रिधा मतः ।
··················································· ॥
··················································· ।
निष्कम्पं कुम्भकं··································· ॥

(२१) मू० पा० आत्मतत्त्वं ततस्त्याज्यं·················· ।
··················································· ॥
संकल्पः क्रमतो····································· ।
तस्मात्सा तु परा··································· ॥
विन्दते ह्यत्र युगपत्सार्वज्ञ्यादिगुणान्परान् ।
वेदनानादि········································· ॥
······························द्विधेति सोच्यते ।

(२२) मू० पा० आत्मनो भैरवं रूपं सदा भाव्यं वरानने ।
तस्य विघ्नाः प्रणश्यन्ति जपश्च सफलो भवेत् ॥

उद्बोधितो[२३] यथा वह्निः (१० प० ३६८ उ० ३६९ पू०)
( मू० पाठभेदः ) १४०
उन्मनापरतो देवि (४ प० ३२९ श्लो०) १४०
चक्षुर्षो[२४] यच्च संधानं (१२ प० १६०-१६१ श्लो०)
( मू० पाठभेदः ) १०८
तदेव भवति स्थूलं (४ प० २९३ श्लो०) ९७
तस्मात्सा तु परा विद्या (४ प० १९१ श्लो०) ४२
त्रिगुणेन[२५] तु जप्तेन (६ प० ५४ श्लो० पू०) मू० पाठभेदः) १२४
न विद्या मातृकापरा (११प० १९७ श्लो०) ६३
नाभ्यां हृदयसंचारात् (७ प० २९४ श्लो०) ८२
पाशावलोकनं त्यक्त्वा (४प०४२९उ०४३०-४३१पू०) ८७
पुर्यष्टक[२६]समावेशात् (११ प० ८६ उ० ८७ पू०)
(मू० पाठभेदः) ९१
प्रसह्य चञ्चलीत्येव (४ प० ३०८ उ० र्धा ३११ तमान्तम्) १०९
प्राणः[२७] प्राणमयः प्राणः (७ प० २४ उ० २५ पू०)
मू० पाठभेदः) १३७

---

(२३) मू पा० उद्बोधितो································।
············प्रविशेत्काष्ठं·························॥
··············································।
················न बध्येत····················॥

(२४) मू० पा० चक्षुषा यच्च दृश्येत वाचो वा यश्च गोचरः।
·····························बुद्धिर्यानि व्यवस्यति ॥

(२५) मू० पा० त्रिगुणेन तु जप्येन··················।

(२६) मू० पा० पुर्यष्टकसमायोगात्पर्यटन्सर्वयोनिषु ।

(२७) मू० पा० प्राणापानमयः प्राणो··············।
नित्यमापूरयन्नेपः··························॥

ब्रह्मविष्ण्विन्द्रदेवानां (६ प० ५४ उ० ५५ पू०) १२५
भित्त्वा क्रमेण सर्वाणि (७ प० ३२४ उ०३२५ पू०) ८२
मलप्रध्वस्तचैतन्यं (२ प० ३८-३९-४०) १५
यस्य[२८] ज्ञेयमयो भावः (४ प० ३०९-३१०) मूल-पु० पाठभेदः) १०९
योगी स्वच्छन्दयोगेन (७ प० २५० उ० २५८ पू०) २८
वायवी धारणाङ्गुष्ठे (७ प० २९६-२९७ श्लो०) ८१
विषयेषु[२९] च सर्वेषु (४ प० ३११) मूलपु० पाठभेदः) ११०
वेदनानादिधर्मस्य (४ प० ३९२-३९३) ८६
व्यापारं मानसं त्यक्त्वा (४ प० ४३२ श्लो०) १०५
स च सर्वेषु भूतेषु (४ प० ३०७-३०८ पू०) ३४
समनान्तं वरारोहे (४ प० ४२७ उ०) ८६
सर्वतत्त्वानि[३०] भूतानि (७ प० २४२) मूल-पु० पाठभेदः) ९३
सा देवी सर्वदेवीनां (१० प० ७२३-७२४ उ०) ३१
सुप्रदीप्ते[३१] यथा वह्नौ (४ प० ३९४) मूल-पु० पाठभेदः) ११२
स्वच्छन्दश्चैव स्वच्छन्दः (७ प० २५८ उ०) ९३
स्वनिर्वाणं परं शुद्धं (४ प० २३८ उ०) मू० पाठभेदः) ९९

---

(२८) मू० पा० यस्य ज्ञेय.............................. ।
मनो न चलते तस्य.............................. ॥

(२९) मू० पा० विषयेषु..............................स्थितः ।

(३०) मू० पा० सर्वतत्त्वानि........वर्णा मन्त्राश्च ये स्मृताः ।
..............................भावनयानया ॥

(३१) मू० पा० सुप्रदीप्ते.............................. ।
देहे प्राणस्थितो.............................. ॥

| | |
|---|---|
| हकारस्तु स्मृतः प्राणः (४ प० २५५ उ०) ………(?)। | १३८ |
| चैतन्यमेक एवात्मा | ६ |
| तद्ग्रहो मन्त्रसद्भावः | ४९ |
| त्रिषु धामसु यद्भोग्यं | २७ |
| दर्शनात्स्पर्शनाद्वापि | ११५ |
| सकारेण बहिर्याति | ११४ |

इति शिवसूत्रविमर्शिन्यां प्रामाणिकग्रन्थ-तत्प्रमाणानां
यथाक्रमं समुच्चयनम् ॥

---

अथ

## चतुर्थपरिशिष्टम् ।

# शिवसूत्रविमर्शिन्याः पारिभाषिकपदविवरणम् ।

| | |
|---|---|
| अकुलम् | ६० तमपृष्ठे ३५ त्तमटिप्पन्यां द्रष्टव्यम् । |
| अख्यातिः | ५६ तमपृष्ठे द्रष्टव्यम् । |
| अग्निः | प्रमाणम् । |
| अग्नीषोमात्मिका | सृष्टिसंहारकारिणी परा शक्तिः । विशेषस्तु ३९ तमपृष्ठे १५५ तमटिप्पन्यां द्रष्टव्यः । |
| अज्ञानम् | ११ शे पृष्ठे ५२ तमटिप्पन्यामवेक्ष्यम् । |
| अणुः | जीवः ( अणिति श्वसिति इति अणुः, देहपुर्यष्टकप्राणाद्याश्रयः चित्तमयः प्रमाता ) । |
| अतिशान्तपदम् | तत्त्वोत्तीर्णं परमशिवधाम । |
| अनादिशिवः | परमशिवः । |
| अनाश्रितः | शिवतत्त्वावस्थितकारणपञ्चके प्रथमं कारणं स्वशक्त्याश्रयत्वात् अनाश्रितसंज्ञम् । |
| अनुत्तरम् | अकारपरामर्शः परमशिवश्च । |
| अन्तरात्मा | ९० तितमे पृष्ठे द्रष्टव्यम् । |
| अन्तस्थाः | ६२ पृष्ठे मूले ४६ त्तम टिप्पन्यां च द्रष्टव्यम् । |
| अबुद्धम् | योगिविषयधारणाज्ञानमयी जागरावस्था । |
| अभिलाषः | १३१ तमे पृष्ठे द्रष्टव्यम् । |
| अमृतवर्णः | सकारः । |
| अम्बा | पारमेश्वरी विशेषशक्तिः ( या अप्ररूढभेदतया सामरस्यात्मिका द्वैतप्रथोन्मुखी ) । |

| | |
|---|---|
| अम्बिका | वर्णशरीरोल्लासिनी विशिष्टशक्तिः । ५३ शत्तमे पृष्ठे, २३ श-टिप्पन्यां च द्रष्टव्यम् । |
| अर्धचन्द्रिका | वर्णशरीरोल्लासिका विशिष्टशक्तिः । |
| अशुद्धविद्या | ५६ शत्तमे पृष्ठे द्रष्टव्यम् । |
| अहंकारः | न ममेदं, ममेदम्—इत्यभिमानसाधनम् । |
| आणवमलम् | १३ शे पृष्ठे द्रष्टव्यम् । |
| आणवसमावेशः | ७९ तमे पृष्ठे द्रष्टव्यम् । |
| आणवोपायः | ७३ तितमे पृष्ठे १ म-टिप्पन्यां द्रष्टव्यम् । |
| आत्मतत्त्वम् | शुद्धविज्ञानकेवलः ( यत् समनापदान्तव्याप्तिकम् ) । |
| आत्मव्याप्तिः | ८७ तितमे पृष्ठे द्रष्टव्यम् । |
| आनन्दः | शक्तिविशेषः । आ-इति वर्णपरामर्शः । |
| आनन्दवृन्दम् | आदि-क्षान्तवर्णसमूहः । |
| आसनम् | ९४ तितमे पृष्ठे द्रष्टव्यम् । |
| इच्छा | इवर्णपरामर्शः । |
| इच्छाशक्तिः | १०० तम पृ० ७९ तमटिप्पन्यां द्रष्टव्यम् । |
| ईशनम् | ई-इत्यक्षरम् । |
| उद्घातः | नादकलानुभवात्मा शब्दः । |
| उद्यमः | १८ श-पृ० द्रष्टव्यम् । |
| उन्मना | समनोपरि शक्तिरूपा मान्त्री कला । ८७ तितमे पृष्ठे, ४३ शत्तमटिप्पन्यां च द्रष्टव्यम् । |
| उन्मेषः | उ-इत्यक्षरपरामर्शः । २० शे पृष्ठे च द्रष्टव्यम् । |
| उन्मेषदशा | ६० तमे पृष्ठे ३८ शत्तमटिप्पन्यां द्रष्टव्यम् । |
| ऊनता | ६० तमे पृष्ठे ३८ शत्तमटिप्पन्यां द्रष्टव्यम् । |
| ऊष्माणः | ६२ तमे पृष्ठे ४७ शत्तमटिप्पन्यां द्रष्टव्यम् । |

| | |
|---|---|
| एकाणवा | पश्यन्तीरूपा वाक् । ५४ शततमे पृष्ठे २६ श-टिप्पन्यां द्रष्टव्यम् । |
| कञ्चुकम् | कलादि-नियतितत्त्वान्तः तत्त्वनिचयः ( पुंसः स्वरूपावरणत्वात् कञ्चुकमिति उच्यते ) । |
| कन्दः | मूलाधाराख्यः स्थानविशेषः । |
| कर्मेन्द्रियाणि | वाक्, पाणी, पादौ, पायुः, उपस्थः । |
| कला | तत्त्वविशेषः, पुरुषस्य किंचित्कर्तृत्वहेतुः । भागः । शक्तिश्च । |
| कलाशरीरम् | १४ श-पृष्ठे द्रष्टव्यम् । |
| कल्पितप्रमाता | शून्यपुर्यष्टकाद्यभिमानी जीवः । |
| कार्ममलम् | १५ श-पृष्ठे ७० तितमटिप्पन्यां द्रष्टव्यम् । |
| कालः | तत्त्वविशेषः, (भावानां भासनाभासनात्मनां क्रमावच्छेदको भूतादिः) । |
| कालपदम् | ७९ तमे पृष्ठे १८ श-टिप्पन्यां द्रष्टव्यम् । |
| कालाग्निः | निवृत्तिकलायां कालाग्निभुवनेशो नाम रुद्रविशेषः, यत्प्रकोपोपक्रमे विश्वं समुपरम्यते संहारारम्भे । |
| कुण्डली | पारमेश्वरी विसर्गशक्तिः ( सैव गर्भीकृतनिखिलविश्वनिर्भरत्वात् कुण्डलिनीशब्दव्यपदेश्या ) । |
| कुम्भकः | प्राणस्य हृदि पूरणम् । |
| कुलम् | परसंवित्तत्त्वम् । षट्त्रिंशत्तत्वानि च; तानि यथा— १ शिव २ शक्ति ३ सदाशिव ४ ईश्वर ५ शुद्धविद्या ६ माया ७ कला ८ विद्या ९ राग १० काल ११ नियति १२ पुरुष १३ प्रकृति १४ बुद्धि १५ अहंकार १६ मनः १७ श्रोत्र |

